श्रीः ।

श्रीमद्रमापतिविरचितम्

# उत्तर-मोहनचरितम् ।

श्रीरघुवंशशर्मणा सटिप्पणीकं कृतभूरिशोधम् ।






तच्च

जैनग्रन्थोत्तेजक-पर्षदा

मोहमय्यां

"मुम्बईवैभव" मुद्रणयन्त्रालये मुद्रयित्वा

प्रकाश्यमानीतम् ।

सं. १९६६, शकः १८३१.




# अथ

# उत्तर-मोहनचारितम् ।

## सटिप्पणीकम् ।

### प्रथमः सर्गः ।

श्रीमत्सारस्वतं तेजो गुरूणां चरणद्वयम् ।
ध्यात्वा नत्वा समोसन श्रीमोहनमुनीशितुः ॥ १ ॥
चरित्रं नातिचित्रं च चित्रं कालानुभावतः ।
पवित्रमुत्तरं वच्मि खनित्रं खलकर्मणः ॥ २ ॥
[1]दधच्चान्द्रीं कान्तिं प्रविशति यदाऽयं कथयितुं
तदैवायातानां श्रवणनिपुणानां हृदयतः ।
सुभावानां ध्वान्तं व्यपगतमिवाभाति मुखतो
यतो मौखी कान्तिः प्रकटयति भावं हृदयगम् ॥ ३ ॥
घनमुक्त[2]चन्द्ररुचिरेण वीक्षितो
जनयन्प्रमोदमतिभक्तिपूर्वकम् ।
जयतिध्वनिं सकलसंघ आवद-
द्गहणं स्मृतं गुरुजनस्य यन्नयः ॥ ४ ॥

---

१ अस्मिन्पद्ये ' शिखरिणी ' वृत्तम् । तल्लक्षणं तु—" रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी " इति ।

२ ' मञ्जुभाषिणी ' वृत्तमिदम् । लक्षणं तु—" सजसा जगौ भवति मञ्जुभाषिणी " इति ।

अ[1]ध्यास्य पट्टं गदितुं यदाय-
मारब्धवान् मेघगभीरवाणिः ।
परस्परं पश्यति नैव यद्वा-
कश्चिन्न वेत्ति स्म मनोगतार्थान् ॥ ५ ॥

उ[2]च्चैः स्थितत्वात्समवत्सलत्वा-
द्दृष्टिः पपातास्य सुदूरगेषु ।
दुर्योधनं प्रान्तगतं विहाय
विष्णोर्यथा पाण्डुसुते हि जिष्णौ ॥ ६ ॥

शृ[3]ण्वत्सु सर्वेषु वदत्सु तेषु
शान्ते रसे क्रीडति गीरियं तु ।
कालात्ययो जात इतीव दध्नि
कर्कोऽथवा माद्यति नैव कालः ॥ ७ ॥

श्रु[4]त्वोत्थिते संघजने प्रभावना
प्रारभ्यत श्रेष्ठिजनैः समन्ततः ।
सश्लाघमिभ्यैरपि या समाददे
ह्यन्तर्मलक्षालनमौषधं यथा ॥ ८ ॥

---

१ इयमुपजातिरिन्द्रवज्रोपेन्द्रवज्राभ्याम् । तल्लक्षणं तु—" अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः " इति । तत्र चतुर्दशसूपजातिभेदेष्वेकादशोऽयं भेदः ।

२ ' इन्द्रवज्रा ' वृत्तम् । तल्लक्षणं तु—" स्यादिन्द्रवज्रा यदि तौ जगौ गः " इति ।

३ अत्रापि ' इन्द्रवज्रा ' वृत्तम् । लक्षणं तु पूर्वोक्तमेव ।

४ ' इन्द्रवंशा ' वृत्तमिदम् । लक्षणं तु " स्यादिन्द्रवंशा ततजै रसंयुतैः " इति ।

[1]यानस्थिताञ्छ्रेष्ठिजनान्कुटुम्बिनो
वीक्ष्यागतैर्ग्राम्यजनैर्विसिस्मिये ।
देवा इमे किंमनुजा न विद्महे
ऋद्धं धनं यस्य स देवताऽथवा ॥ ९ ॥
[2]श्रुत्वागतं श्रोतृजनं गृहं स्वं
ये नागताः कार्यवशात्तदानीम् ।
तेऽभ्येत्य पृच्छन्ति कथाः स्म तूर्णं
श्रद्धातुरः किं कुरुते विलम्बम् ॥ १० ॥
[3]यथाश्रुतं तेऽपि समूचुरर्थतो
गृहे गृहे धर्मकथाः प्रवर्तिताः ।
ज्योतिर्विदा प्रोक्तमवाप्य सत्क्षणं
प्रसार्यते किंनु न ऋक्षसूचकैः ॥ ११ ॥
[4]सम्यक्त्वमासाद्य रुचिर्विवर्ध्यतां
भ्रष्टास्ततो दुर्गतिमाप्नुवन्तु नो ।
त्यक्त्वा पतिं किं कुहचित्सुखेच्छया
भ्राम्यन्स्थितिं स्वाश्रयतेऽबलाजनः ॥ १२ ॥

---

१ अत्रापि 'इन्द्रवंशा' वृत्तम् । लक्षणं तूक्तमेव पूर्वत्र ।

२ 'इन्द्रवज्रा' वृत्तम् । लक्षणं तु पूर्वमेवोक्तम् ।

३ इयमुपजातिर्वंशस्थेन्द्रवंशाभ्याम् । "इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति ष्विदमेव नाम" इत्युक्तेः ।

४ अत्रापि 'इन्द्रवंशा' वृत्तम् ।

आत्मैव[1] वेद्यः परमो निरञ्जनः
सत्यः समः सर्वविकारशून्यतः ।
देहेन्द्रियप्राणमनस्सु यस्य हि
भ्रान्तिर्बहूनां हृदये चकास्त्यलम् ॥ १३ ॥
प्रदीपकान्तिः[2] परिमेयदेहं
व्याप्य स्थितस्तीर्थकृता प्रदिष्टः ।
अजोऽपि जातो ह्यमृतो मृतोऽपि
देहेषु जातेषु विनश्वरेषु ॥ १४ ॥
विचित्रसंपादितकर्मजाल-[3]
सान्निध्यतो योनिषु जायतेऽयम् ।
तस्मिन्निलीने नहि किंचिदस्ति
नृदेवतिर्यङ्नरकित्वमास्मिन् ॥ १५ ॥
स्त्रीत्वं[4] न पुंस्त्वं न नपुंसकत्वं
बालत्ववृद्धत्वयुवत्वमास्मिन् ।
नैवास्ति नानापरिणामजाले
देहेऽस्य भोगार्थमदृष्टभेदात् ॥ १६ ॥

---

१ इहापि 'इन्द्रवंशा' एव ।

२ चतुर्दशसूपजातिभेदेषु दशमोऽयं भेदः ।

३ षष्ठोऽयमुपजातिभेदः ।

४ 'इन्द्रवज्रा' इयम् । लक्षणं त्वाभिहितमवे ।

[1]एतेष्वहङ्कारतया प्रतीयते
तथापि नैते सहयायिनो मताः ।
पुत्रेषु पत्नीषु धनादिवस्तुषु
ममत्वभावेषु विचार्यतां स्वयम् ॥ १७ ॥

[2]ज्ञानस्वरूपोऽप्यपदिश्यतेऽयकं
मूर्खोऽयमित्यादिकटुप्रलापनैः ।
सुखस्वरूपोऽपि दरिद्रशेखर-
श्चिन्त्या सदा कर्मगतिर्दुरत्यया ॥ १८ ॥

विर्धि[3]न्तत[4]स्तस्य च कर्मणां गते-
र्दुरत्ययत्वं क्रमशो निवर्तते ।
सशोकमोहा विषयाभिलाषिता
विवर्धते ज्ञानततिः ससन्मतिः ॥ १९ ॥

[5]यत्कृतेऽयमतिखिद्यते सदा
स्वार्थसाधनसमीहयेरितः ।
तेन मामकपदं गतेन हा
हीयते हृतसमस्तवस्तुना ॥ २० ॥

---

१ इयमुपजातिरिन्द्रवंशावंशस्थाभ्याम् ।

२ इयमपीन्द्रवंशावंशस्थामिश्रैवोपजातिः ।

३ णिचः पाक्षिकत्वादिदं रूपम् ।

४ वंशस्थं वृत्तम् । तल्लक्षणं तु—“ जतौ तु वंशस्थमुदीरितं जरौ ” इति ।

५ इतआरभ्य ‘ नेत्रबाण० ’ इति पञ्चसप्ततिमितपद्यपर्यन्तं ‘ रथोद्धता ’ वृत्तं
। तल्लक्षणं तु—“ रान्नराविह रथोद्धता लगौ ” इति ।

एवमाद्यनुभवेषु सत्स्वपि
नैव वेत्ति जगतां विडम्बनाः ।
कर्मकूपपतितः सहायका-
न्मन्यते रिपुगणान्प्रमादयम् ॥ २१ ॥
एवमादिमुनिराजभाषितं
श्रावकेभ्य उपलभ्य भावुकाः ।
धावितुं ववृतिरेऽल्पकर्मका
मोहनर्षिवचनाऽमृतेच्छवः ॥ २२ ॥
आगतान्समवलोक्य भाविनो
भास्करो भवजनाब्जभासने ।
बोधहेतुबहुलां प्रकीर्णकान्
देशनामकृत वेद्यकीर्णिकाम् ॥ २३ ॥
ज्ञानमेव सकलार्थसाधकं
सक्रियं विरहितं नपुंसकम्
सा क्रियापि शुभभावनान्विता
कामधुग्विरहिताथ सर्पिणी ॥ २४ ॥
ज्ञानमेकमपि वेद्यभेदतो
भिद्यते गृहघटैर्यथा नभः ।
ज्ञेयजातमखिलार्थदर्शिभि-
स्तीर्थकृद्भिरुदितं यथातथम् ॥ २५ ॥

भौतिकेऽत्र परिणामशालिनि
सोऽहमस्मि च मतिर्न युज्यते ।
संभवश्च खलु यत्र विद्यते
मृग्यतां सकलसाधनैर्हि तत् ॥ २६ ॥
तत्स्वरूपमपि तस्य लभ्यते
नैव यस्य नहि शुद्धमान्तरम् ।
तस्य शोधकमृते चतुर्विधा-
न्नान्यदस्ति सुगमं च धर्मतः ॥ २७ ॥
एष्वभीष्टफलकल्पपादपे-
षु स्थितिः सततमस्ति भावुकाः ।
यस्य तस्य भवभीतिसर्पिणी
नाभिगच्छति समीपमुद्धता ॥ २८ ॥
तत्त्वदृग्भिरपरोक्षदर्शिभिः
शोकमोहरहितैर्महात्मभिः ।
निर्निदानतपसः प्रशंसनं
सर्वतोऽधिकमिति स्फुटं कृतम् ॥ २९ ॥
निर्निदानतपसाग्निनैव य-
द्दह्यते मलकुलं समूलकम् ।
आविरास्ति हृदये सुनिर्मले
धारणा शुभविचारणान्विता ॥ ३० ॥

सत्सु बुद्धिविभवादिहेतुषु
तर्क्यते वितथमेव तार्किकैः ।
तत्र शुद्धहृदयैरवाङ्मुखै-
स्तथ्यमेव विमलार्थदर्शिभिः ॥ ३१ ॥
श्रावकाः शृणुत शान्तचित्ततो
वच्मि रम्यममलं निदर्शनम् ।
येन सत्वहृदयैकवेदिता
ह्यात्मनोऽत्र तपसश्च हेतुता ॥ ३२ ॥
दानवेन्द्रहृदये कदाप्यभू-
दात्मतत्त्वमननाय संस्पृहा ।
जायते हि मनसो विलक्षणा
वायुतोऽधिकगतेर्गतिः स्मृतिः ॥ ३३
वच्मि कस्य पुरतो मनोरथं
स्वीयमेतमिति ह्यचिन्तयत् ।
मार्ग एष महतां सदातनो
यद्विचारसचिवं सुभाषणम् ॥ ३४ ॥
वृद्धमन्त्रिण उपाह्वनाय च
वेत्रिणं त्वरितमादिदेश सः ।
चिन्तितार्थकरणे विलम्बिता
मूर्खता किमपि कारणं विना ॥ ३५ ॥

स्वागतं महति आगते वद-
न्नीश्वरोऽपि स च सच्चकार तम् ।
वृद्धसत्कृतिसुरद्रुवल्लरी-
सेवने हि विमतं न कस्यचित् ॥ ३६ ॥

मन्त्रिराज मम सच्चिदात्मनि
संशयोऽस्ति सुमहान्स्वयम्भवः ।
संशया हि नहि भावितात्मनां
योगिनामभिभवन्ति केवलम् ॥ ३७ ॥

तस्य तत्त्वमवगन्तुमुत्सहे
ब्रूहि मे झटिति कोऽस्ति सद्गुरुः ।
सद्गुरोरभिगमाप्तिमन्तरा
नैव संसृतिसमाप्तिः कदाचन ॥ ३८ ॥

मन्त्रिशेखर उवाच साम्प्रतं
साम्प्रतं मतमिदं मनोहरम् ।
पक्षपातरहितैः सुवादिभि-
र्युक्तमात्रमनुमुद्यते सदा ॥ ३९ ॥

देव मा[1] कुरु विलम्बमुद्यतो
ब्रह्मदेवसविधं भवेरितुम् ।
श्रेयसे त्वरणमेव युज्यते
विघ्नभीतिरथवेदृशे बहु ॥ ४० ॥

---

१ नायं माङ् किन्तु माशब्दः ।

तेन मन्त्रिमहितेन नोदितो
ब्रह्मलोकनिकटं जगाम सः ।
उत्प्रमोदजतरङ्गशालिनां
नैव दूरतरमस्ति किंचन ॥ ४१ ॥
तच्चमत्कृतिमतीव विह्वलो
लोकमान उपशान्तहृत्तमाः ।
सिस्मियेऽथ बहुलं प्रमोदनं
नैव माति हृदि यस्य कस्य चित् ॥ ४२ ॥
सोऽभिगच्छति पुरो यदा तदा
तत्र पश्यति विशन्तमेककम् ।
भासमानमभितः पुरन्दरं
तत्त्वबोधकरणं न यद्बलम् ॥ ४३ ॥
तौ प्रकृष्टबलरूपशालिनौ
नेमतुः कमलजं यथाक्रमम् ।
ज्ञाततत्त्वविदुषः पुरः प्रभो-
र्नीतिकर्तुमसुरोऽपि शक्नुते ॥ ४४ ॥
आशिषा समभिनन्द्य तौ भृशं
सोऽन्वयुङ्क्त कुशलं चतुर्मुखः ।
आगतौ कुत उरुक्रमौ युवां
हेतुतोऽभिवदतां महाजनौ ॥ ४५ ॥

ब्रह्मदेववचसातिहर्षितौ
वीक्ष्य चावसरमूचतू रहः ।
देवदेव भवदीयदर्शना-
त्किं यदस्ति बलवत्प्रयोजनम् ॥ ४६ ॥
किंच चेद्भवति नौ कृपा प्रभो
देवदेव परमार्थदर्शक ।
कोऽस्ति चेतन इति स्फुटं गुरो
दर्शयात्र हि मनोरथो महान् ॥ ४७ ॥
ब्रह्मणो हृदि मुदस्तदर्थना-
त्संबभूवुरितिचिन्तया युताः ।
भोगलुब्धहृदयैर्न दुर्ग्रहो
योगिभिस्त्वयमवाप्यतेऽञ्जसा ॥ ४८ ॥
अस्तु तावदनयोः प्रवर्तनं
दुःशकेऽत्र यदभूद्वरं हि तत् ।
पश्यतं समवधानपूर्वकं
दर्पणेऽत्र निजचेतनं युवाम् ॥ ४९ ॥
ब्रह्मणो गिरमिमां पुरन्दरौ
तौ निशम्य सहसा स्म पश्यतः ।
दर्पणे निजकमेव बिम्बकं
वृत्तिनृत्यसमलंकृतं मुहुः ॥ ५० ॥

जातसंशयतमावुभावपि
मानिनौ स्म न च पृच्छतो ह्रिया ।
मानमस्ति सुदृढो रिपुर्यतः
सद्विवेकरहितः पतत्यधः ॥ ५१ ॥
पृच्छतो मम भवेदितः समा-
ज्ज्ञाततत्त्वविदुषो न लाघवम् ।
इत्यभिग्रहवशात्ससंशयौ
कं प्रणम्य गृहमीयतुस्तु तौ ॥ ५२ ॥
दैत्यराड्गृहमजञ्शरीरकं
निश्चिकाय वितथं हि चेतनम् ।
उद्धटत्वमतएव निन्दितं
सद्विवेचनविधौ विधेरपि ॥ ५३ ॥
चिन्तयातिविमनाः शतक्रतु-
र्नो मुहूर्तमपि विस्मृतिं ललौ ।
दर्पणे निजकमेव बिम्बकं
पश्यतीव जगदीक्षतेऽखिलम् ॥ ५४ ॥
वर्षभुक्तिमिव तां विभावरीं
सः कथंचिदपनीय तद्रुचिः ।
आजगाम चतुराननं पुन-
र्व्याजहार विकसन्मुखाम्बुजम् ॥ ५५ ॥

देवदेव वद किं त्वया पुरा
दर्शितं न विदितं मया तदा ।
केवलं निजकमेव बिम्बितं
दर्पणे समवलोकि बिम्बकम् ॥ ५६ ॥
श्रावकाः शृणुत तत्सुरेश्वरं
प्रत्यगात्मदृगजो जगाद यत् ।
बाह्यवृत्तिविवशेन देहिना
दुर्गमास्ति विदिता स्वयंप्रभा ॥ ५७ ॥
चेत्तवाऽस्ति सबलं कुतूहलं
तत्त्वबोधविषये शताक्रतो ।
तप्यतां तप उपेक्ष्य तत्फलं
यत्सुरद्रुमधरीकरोत्यदः ॥ ५८ ॥
ब्रह्मणोक्तमवधार्य तत्क्षणा-
दुद्धभावभृतसद्धृदा धृताः ।
तप्तुमेव विविधा अभिग्रहाः
सद्गृहग्रहजुषा बिडौजसा ॥ ५९ ॥
कालतः पुनरुरुप्रभो हरिः
पृष्टवान्किमपि नूतनोत्तरम् ।
नावदद्विधिरुपायवित्तम-
स्तप्यतामिति दिदेश चाऽसकृत् ॥ ६० ॥

श्रावकाः शृणुत नो बिडौजसो-
ऽभूद्दते च तपसोऽधिकारिता ।
आत्मतत्त्वजनने तु का कथा
भ्राम्यतो वितथमानिनो बहु ॥ ६१ ॥
मोहनर्षिवचनं सुधोपमं
युक्तिगर्भितमिदं निपीय ते ।
भावुका बुबुधुरल्पकर्म्मका
निर्निमित्तमिह नैव किञ्चन ॥ ६२ ॥
तद्विचारसहकारिकारणं
किं द्वितीय उपदेशकोऽथवा ।
भूमिवाणनिधिचन्द्रसंख्यक-
वैक्रमाब्दजलकाल आगमत् ॥ ६३ ॥
श्रावकैरमरदानवेन्द्रयो-
रन्तरेण तप आत्मवेदने ।
नो बभूव गतिरुद्धधीमतोः
का कथाऽल्पमतिवैभवस्य तु ॥ ६४ ॥
चिन्तयाद्भिरिति भावितात्मभि-
र्ह्यात्मनोऽक्षयकरं तपो द्रुतम् ।
अक्षयाऽभिधमधैर्यधर्षिभि-
श्चाङ्गयकारि गुरुदेवसाक्षिकम् ॥ ६५

श्रावणे सकलकर्मसूदना-
त्सार्थनाम खलु कर्मसूदनम् ।
श्रावकाः कतिपये कुतूहला-
न्निष्कुतर्कमतयः प्रचक्रिरे ॥ ६६ ॥

केऽपि संसृतिरुषश्चतुर्दश-
पूर्विणां तपसि शुद्धचेतसः ।
आस्थिताः सकलसौख्यकारणे
धर्म्मकार्यकरणे मतिर्मतिः ॥ ६७ ॥

केऽपि कर्मरिपुभिः समं समै-
र्योद्धुमुत्सुकमनोऽभिलाषुकाः ।
शस्त्रमप्रतिहतं श्रुतं तपः
पञ्चरङ्गितपआदि चक्रिरे ॥ ६८ ॥

किं ब्रवीमि बहु नैव कोऽप्यभू-
द्यो हि मोहनमुनेर्वचोऽमृतम् ।
सन्निपीय किमपि स्फुटं तपो
नो चकार निजशक्तिपूर्वकम् ॥ ६९ ॥

आश्विने कुमुदिनीप्रकाशके
पूर्णमण्डलधरे शुभे क्षणे ।
स्फारमारमदमर्दिनो जनाः
सुस्थितास्तपसि चोपधानके ॥ ७० ॥

सत्सु तत्र बहुषूपकर्तृषु
मुख्यतोऽग्रगतिकौ बभूवतुः ।
कोष्ठगार्धुपपदाह्वरामजी-
देवकर्णवणिजौ प्रवर्तकौ ॥ ७१ ॥

सप्रकारमुपधानशालिनो
मालिकाभिरुपपूजितास्सता ।
अस्ति काऽपि शुभकर्मणां प्रभा
नैति या खलखचार्युपद्धतिम् ॥ ७२ ॥

उत्सवो जनमहोत्सवो महा-
नष्टभिश्च शुभवासरैस्तदा ।
संबभूव बहुभक्तिपूर्वकं
दुष्टकर्मदलनैकसाहसी ॥ ७३ ॥

नन्दिराजमुखतोऽतिशोभना
या बभूव रचना कलाचणा ।
सा जघन्यकविवागगोचर--
त्वान्न वर्णनकृतेऽत्र नीयते ॥ ७४ ॥

नेत्रबाणनिधिभूमिताब्दके
कार्तिके श्रमधनातिशायिभिः ।
श्रावकैर्विविधभक्तिपूर्वकं
कर्म शोभनतमं कृतं बहु ॥ ७५ ॥

[1]समवसरणदृश्यं दृष्टमात्रं सदेव
विरचितमतिभक्त्या श्रावकैर्भाग्यभाग्भिः ।
हरति कलुषजालं सान्द्रमानन्दमन्त-
र्वितरति यदवाच्यं मादृशानां कवीनाम् ॥७६॥

[2]सम्मत्तशिखररचना ह्यासीद्रम्यातिशायिनी या ताम् ।
लोकमानस्य शिखरं द्रष्टुमुपक्रमो नहि भवेत् कस्य ॥७७॥

[3]तदवसरे हेमचन्द्रतनयेन फकीरचन्द्रचन्द्रेण ।
उद्यापना कृता श्रीकल्याणजेन कस्तूरचन्द्रेण ॥ ७८ ॥

[4]अष्टोत्तरस्नात्रमतीव सम्पदा
कृतं सुसंघेन महात्मभिः समम् ।
अन्यान्यपि श्लाघ्यतराणि कानिचि-
च्छुभानि कर्माणि बभूवुरोमिति ॥ ७९ ॥

[5]दोषान्धकारपरिहारकृतप्रयत्नः
सर्वज्ञसूक्तिततिदीधितिराननेन्दुः ।
मोदं ददद्ददवत्कुलकैरवाणां
जेजयितां जगति मोहनलालभिक्षोः ॥ ८० ॥

इति श्रीउत्तरमोहनचरिते प्रथमः सर्गः समाप्तः ॥ १ ॥

---

१ 'मालिनी'-वृत्तमिदम् । तल्लक्षणं तु--''ननमयययुतेयं मालिनी भोगिलोकैः'' इतिः।

२ गीतिरियम् । लक्षणं तु—''आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदु-
भयोः । दलयो कृतयतिशोभां गीतिं तां गीतवान्भुजङ्गेशः ॥''

३ इयमपि गीतिरेव ।

४ इयमुपजातिरिन्द्रवंशावंशस्थाभ्याम् ।

५ 'वसन्ततिलका'-वृत्तम् । लक्षणं तु-'' ज्ञेया वसन्ततिलका तभजा जगौ गः'' इति

# द्वितीयः सर्गः ।

अहन्त्वेन ममत्वेन यस्य चेतो न दूयते।
परोपकारधीचुञ्चुरस्ति कोऽपि स मह्यते ॥ १ ॥
अथ श्रीमोहनमुनिर्भव्याम्भोजनभोमणिः।
बहूनुद्बोधयामास उपदेशमयांशुभिः ॥ २ ॥
बुद्धास्तदुपदेशाद्ये तेषां नाम यथाक्रमम् ।
संक्षेपत इदं श्राद्धाः स्मरणीयं ब्रवीम्यहम् ॥ ३ ॥
राधनपुरवास्तव्यो जगज्जीवननामकः ।
संसारसुखतुच्छत्वं मन्वानो भवभीरुकः ॥ ४ ॥
मार्गशीर्षे तिथावेकादश्यां सद्भावभावितः ।
ललौ दीक्षां चलद्रागद्वेषावर्तोदधेस्तरिम् ॥ ५ ॥
श्रीमद्धर्षमुनेः शिष्यः सर्वशिष्यशिरोमणिः ।
अभूच्च सुगुरुं प्राप्य जहर्ष विशदाशयः ॥ ६ ॥
जयस्ते कर्मणो भावी चारित्रेण महासिना ।
अनेनेति जयस्तस्य नामधेयं चकार किम् ॥ ७ ॥
झालौरपट्टीप्रान्तस्थबोकराग्रामवासिकः ।
नवलः सबलो जेतुं बभूव निजकर्मणाम् ॥ ८ ॥
शस्त्रमव्याहतं श्रुत्वा चरणं तत्पराजये ।
जग्राह मुनिराजोऽयं मरौ कल्पतरुः किमु ॥ ९ ॥

सन्नयत्वान्नयो नाम चकारास्य महात्मनः ।
रीतिर्हि मुनिराजानामाद्यं मुञ्चति नाक्षरम् ॥१०॥
कर्पूरचन्द्रपुत्रस्य सौभाग्यस्य गृहे ह्यभूत् ।
दीक्षेयं माघकृष्णस्य पञ्चम्यां विधिपूर्वकम् ॥ ११ ॥
अयं बभूव श्रीकान्तिमुनेः शिष्यो महात्मनः ।
यः स्वाचारचणो भव्यान् विहरन्नन्दयत्यलम् ॥ १२ ॥
ततो विहृत्य आगासीं गताः श्रीमोहनर्षयः ।
गतागतैः क्षिपन्त्येव कालं सन्मुनयः सदा ॥ १३ ॥
मर्वन्तःपातिझालौरपट्टीकृतनिवासकः ।
अद्य बाडोदरावासी श्रावको लखमाभिधः ॥ १४ ॥
श्रुत्वा मुनित्वमाहात्म्यं शान्तचारित्रमोहनात् ।
प्रभावान्मोहनात्सोऽथ बुबुधे न्यूनकर्मकः ॥ १५ ॥
तस्मै श्रद्धालवे दीक्षां भवभ्रमणकर्त्तरीम् ।
शिवश्रीदायिनीं नृत्वसारभूतां समुद्ददौ ॥ १६ ॥
दीक्षेयं माघशुक्लायां पञ्चम्यां विधिपूर्वकम् ।
सल्लग्नर्क्षान्विते काले बभूव सुखशालिनी ॥ १७ ॥
देवनृदानवाऽचाल्यसम्यक्त्वस्य महामुनेः ।
शिष्यो देवमुनेर्जातो नाम्ना लक्ष्मीमुनिर्मुनिः ॥ १८ ॥
अल्पैहलौकिकास्वादबह्वपायकरीं मुने ।
हित्वा लक्ष्मीमिमां रागद्वेषादिफलकारणम् ॥ १९ ॥

अनेन चरणेन त्वं स्वल्पैरेव भवैः शुभैः ।
मुक्तिलक्ष्मीं प्राप्स्यसीति लक्ष्मीनाम्नास्य सूचितम् ॥
श्रावकैः कारयामास धर्मानन्याननेकशः ।
यद्वा क्षीणकषायाणां भ्रमणे कारणं किमु ॥ २१ ॥
फाल्गुनस्य शुक्लपक्षे श्रीचिन्तामणिपार्श्वयोः ।
वृषभं वासुपूज्यं च स्थापयामास सन्मुनिः ॥ २२ ॥
तृतीयायां चतुर्थ्यां तु मोहमातङ्गकेसरी ।
मोहनर्षिः कृष्णकान्तिं पार्श्वनाथं बहूत्सवम् ॥ २३ ॥
अस्मिन्नेव दिने रूपं संसारस्य विभावयन् ।
आत्मानमात्मनि स्यूताद्गुणाद्भ्रान्तं सुशिक्षयन् ॥२४॥
मरुस्थलीकुक्षिवृत्तिसादरीग्रामभूषणः ।
पोरवाडाख्यजातीयो जेठाभाई भवाम्बुधेः ॥ २५ ॥
तारिणीं हारिणीं मोहसन्ततेर्गुरुसाक्षिकम् ।
दक्षो दीक्षां ललौ भक्त्या महामोदो महामनाः॥२६॥
दीक्षामिमां लसत्कान्तिर्मुनिः कान्तिर्महातपाः ।
ददौ चकार नामास्य जीवनं मुनिसंयुतम् ॥ २७ ॥
तदानीं दम्मणस्थश्रीसंघैर्दृष्टोन्नतिं पराम् ।
शासनस्य महोल्लासैः कृतं पूजादिकोत्सवम् ॥२८॥
द्रव्यक्षेत्रादिसामग्रीं विदन्तो मोहनर्षयः ।
भाव्यानि शुभकर्माणि वीक्ष्य थाणामगुः किमु ॥२९॥

तत्र चालोक्य धनिनः श्रावकानतिभावुकान् ।
कायक्लेशाऽसहत्वेन तपोबाह्यान्महामुनिः ॥ ३० ॥
स्वल्पकायश्रमे पूजादानादिशुभकर्मणि ।
प्रावर्तयत यद्वातो मुनयः संसृतिद्रुहः ॥ ३१ ॥
तेऽपि तं हितकर्तारं गुरुं श्रीमोहनं मुनिम् ।
एभिः सत्कर्मभिश्चक्रुः प्रसन्नं भाग्यशालिनः ॥३२॥
ारब्धवन्तो द्राग् भूरिद्रव्यैर्हर्षातिरेकिणः ।
ाशासनोन्नतिं श्राद्धा आष्टाह्निकमहोत्सवम् ॥ ३३ ॥
ादद्विविधतूर्या श्रीसंघोत्साहविभूषणा ।
भूषणाऽलंकृता बाला रथयात्रा मनोहरा ॥ ३४ ॥
वरापथछ्थद्वाजिमुख्यदृश्यातिशायिनी ।
ाभूवाद्यापि याऽजस्रं स्मर्यतेऽन्यप्रसंगतः ॥ ३५ ॥
ांस्तथारागिणो देवगुरुकृत्ये मनस्विनः ।
ारयित्वा लालबागमाजग्मुर्मोहनर्षयः ॥ ३६ ॥
ात्र स्थितौ निजौ शिष्यौ राजहेमौ मुनिव्रतौ ।
वेहर्तुमित इच्छाव वादिनावन्वमन्यत ॥ ३७ ॥
ावनुज्ञां गुरोः प्राप्य विहरन्तौ रविप्रभौ ।
ोधयन्तौ हृदब्जानि भव्यानां देशनांशुभिः॥३८॥
देनैः कतिपयैरेव मालवोदरवर्तिनम् ।
ापतू रतलामाह्वं शर्मश्रीधाम पत्तनम् ॥ ३९ ॥

किमुच्छिष्टे सुयत्नेन हृषीकविषये मम ।
प्राप्तेनापि च किं तेन येनात्माप्युपहास्यते ॥ ४० ॥
अनुभूतेनाऽपि येन न तृप्तिः पारमार्थिकी ।
इत्यादिभावनाशुद्धमानसं श्रावकोत्तमम् ॥ ४१ ॥
दयाचन्द्रात्मजं प्रेमचन्द्रनामानमुत्सुकम् ।
दीक्षायां श्रीमालिजातिं सूर्यपत्तनवासिनम् ॥ ४२ ॥
योग्यं ज्ञात्वा साधुवेषैर्लिङ्गसंवेगिनं द्रुतम् ।
व्यधातां साधवो यद्वा संसारस्य महारयः ॥ ४३ ॥
श्रुत्वा संवेगिनं प्रेमचन्द्रं दुधुवतुर्द्रुतम् ।
पितरौ सहजा यद्वा रीतिः संसारिणामियम् ॥ ४४ ॥
तं ज्ञात्वा वेषमात्रेण साधुं दीक्षाविवर्जितम् ।
जहर्षतुर्न तद्भावं मेर्वचाल्यं चचर्वतुः ॥ ४५ ॥
लग्नौ दुराग्रहं कर्तुं पुनर्गार्हस्थ्यपालने ।
निराकृतौ लसत्त्यागगर्भवाचाऽथ तेन तौ ॥ ४६ ॥
अस्ति चेत्तव सद्भावो दीक्षायां तर्हि गम्यताम् ।
मोहनर्षिसमीपोऽस्मा-भिः साकमित्यवोचताम् ॥४७॥
सोऽप्येतद्वचनं नैव प्रतिकूलमिति स्फुटम् ।
ध्यात्वा सुधीस्तथा धीरो हर्षादाह स्म चोमिति॥ ४८ ॥
तौ तमादाय मुनये समर्प्य च समूचतुः ।
भिक्षां सचेतनामेनां गृहीत्वास्मान् समुद्धर ॥ ४९ ॥

अस्मै दीक्षां महोत्साहां माधवे प्रथमे दले ।
ददौ दिदेश चारित्रदुर्वहत्वं च तद्यथा ॥ ५० ॥
पालितं सदिदं साधो क्षालयत्यखिलं मलम् ।
हेलितं लीलया लौल्याद्धाथैनं पातयत्यधः ॥ ५१ ॥
प्रतापाच्छिन्नसंसारिजालजातत्वतो ह्ययम् ।
कर्मान्धकारविध्वंसि प्रतापो नाम लब्धवान् ॥ ५२ ॥
यशोधवलिताशेषाशस्य च श्रीमहामुनेः ।
यशोमुनेर्यशोराशिमनुकर्तुमयं किमु ॥ ५३ ॥
शिष्योऽभवद्विनेया हि विना सद्गुरुसंगतिम् ।
सदाचारजुषो नैव भवन्ति प्रलसन्ति च ॥ ५४ ॥
श्रीमोहनमुनिः पश्चाद्वालुकेश्वरमाययौ ।
सतां स्वेच्छाविहाराणां क ईष्टे वक्तुमाशयम् ॥ ५५ ॥
शक्रचन्द्रस्यात्मजस्य चुन्नीलालस्य वेश्मनि ।
संस्तारकं व्यधात्सौक्ष्म्याद्दिदेश करुणाकरः ॥ ५६ ॥
यौवनस्य फलं यो हि विषयं मन्यते बुधः ।
स आत्मानं पशोर्भिन्नं जानीते केन हेतुना ॥ ५७ ॥
यश्च त्यक्तेन्द्रियार्थेषु मनसैव निमज्जति ।
स प्रष्टव्यः कथं साधो लोकद्वयविनाशकः ॥ ५८ ॥
विद्युच्चलचलेष्वेषु प्रवृत्तिर्विषयेषु हि ।
श्रावकाः संसृतेर्हेतुरत्यभ्यासपुरस्सरम् ॥ ५९ ॥

कोऽहं किं मम कर्तव्यमितिचिन्तापरो गृही ।
असक्तो विषयान्भुञ्जन्नपि पूर्वाद्विशिष्यते ॥ ६० ॥
एवं श्रुत्वा गृहस्थानामासक्तिर्द्राग् न्यवर्तत ।
मुनिमोहनलालानां वागेवेदृङ् न संशयः ॥ ६१ ॥
तस्मात्पुनर्लालबाग--माजग्मुर्मोहनर्षयः ।
इदमेवहि साधुत्वं यदासक्त्या न वञ्च्यते ॥ ६२ ॥
पिशाच्या वञ्चितस्यासीन्नार्या धूर्तेन चौषधम् ।
आसक्त्याक्रान्तचित्तस्य कथाशेषत्वमौषधम् ॥ ६३ ॥
अस्ति मरुस्थलीचूडा चूडानाम्नी मनोहरा ।
झालौरपट्टनेदिष्ठा वसतिः श्रेष्ठ्यधिष्ठिता ॥ ६४ ॥
तदलङ्कारभूतः श्रीकेशवः श्रावकाग्रणीः ।
अमीभिर्गुरुभिः सार्धं ज्येष्ठां परिचितिं व्यधात् ॥६५॥
दृष्ट्वा तु तस्य सत्प्रेम मत्वासन्नचरित्रिणम् ।
चारित्रशस्त्रभेद्यत्वं संसारस्योपादिष्टवान् ॥ ६६ ॥
देवानुप्रिय संसारश्चेद्दुःखं कूटरूपतः ।
तदायं व्यष्टिभावेन सुखहेतुः कथं भवेत् ॥ ६७ ॥
सुखस्यात्र प्रतीतिस्तु भ्रान्तीरज्जावहेरिव ।
स्यात्कथं सुखशब्द्यं तत्परिणामभयावहम् ॥ ६८ ॥
चिन्ता निदानं दुःखस्य तस्या भूमिश्च गेहिनः ।
तेऽपि चेत्सुखिनो मन्ये दुःखं खरविषाणवत् ॥ ६९ ॥

श्रीमोहनमुनेर्वाक्यं श्रुत्वेदं भवभीरुकः ।
बभूव तत्क्षणादेव शान्तचारित्रमोहनः ॥ ७० ॥
भावतो जगृहेऽनेन केशवेन महात्मना ।
दीक्षा शिक्षा भवभ्रान्तमत्तमातङ्गकर्मणाम् ॥ ७१ ॥
योगं ध्यायन्कदालिङ्गयतिर्भूयामहं हृदि ।
भावयन्भावनां रम्यां प्राप्तो रत्लामपत्तनम् ॥ ७२ ॥
तत्र राजमुनेः पार्श्वे ललौ दीक्षां प्रमोदतः ।
सदन्ताश्चिन्तिते कार्ये विलम्बः प्रायशो नहि ॥ ७३ ॥
रत्नत्रयसमापन्नं गुरुं हेममुनिं व्यधात् ।
यद्वा रत्नैकसंपन्नं हेम केनात्र हीयते ॥ ७४ ॥
त्रिभीरत्नैर्नखैः कर्म-मातङ्गान्विदरिष्यति ।
मत्वार्श-आद्यजन्तोऽस्य केसरी नाम चक्रतुः ॥ ७५ ॥
भविष्यद्धर्ममाश्रित्य सिंहारोपो न दूषणम् ।
भविष्यतापि लिङ्गेन साध्यसिद्धिं प्रपश्यताम् ॥ ७६ ॥
श्रुत्वा प्रव्रजितं चास्य माता भ्रात्रादयो भृशम् ।
रुदन्त आययुर्यद्वा मणिर्नागेन मृग्यते ॥ ७७ ॥
गच्छ वत्स गृहं तावन्ममायुःक्षपणे पुनः ।
इत्थं भूया इत्यवोच--द्रुदन्ती जननी बहु ॥ ७८ ॥
पुत्रप्रव्रज्या मातृभ्यो नैव प्रायः प्ररोचते ।
मरुदेव्यै नर्षभस्याप्यरोचिष्टेति श्रूयते ॥ ७९ ॥

अनुकूलोपसर्गः स मत्वानेन महात्मना ।
हापितः कथ्यते यद्वा स्वार्थत्यागो हि मूर्खता ॥ ८० ॥
महानौर्मोहनश्चेतो मोहाम्बुधिनिमज्जताम् ।
मासकल्पं मुनिः कर्तुं शिष्यवृन्दसमन्वितः ॥ ८१ ॥
दशौशवालकच्छीय—वाटिकां स्फटिकद्युतिम् ।
समाययौ तत्प्रसंगा—ज्जाता शुभपरंपरा ॥ ८२ ॥
नृसिंहपद्मसिंहाद्याः श्रावका धनिनो मुदा ।
प्राज्यैर्धनव्ययैश्चक्रुः शासनोन्नतिमुत्तमाम् ॥ ८३ ॥
तस्मिन्नवसरे जाम—नगरस्थः समागतः ।
विंशश्रीमालिजातीयो हेमचन्द्रः सुभावुकः ॥ ८४ ॥
तं चासन्नभवं मत्वा मोहनर्षिरमोघवाक् ।
धीरैर्वीरैश्च को गम्यो मार्ग इत्युपचक्रमे ॥ ८५ ॥
स कथं नाम मार्गः स्या—द्येन गन्तुः समीहितम् ।
न प्राप्यते पुरं किन्तु त्यक्तमेव पुनः पुनः ॥ ८६ ॥
पिपीलिकादिब्रह्मान्ता ब्रह्माण्डोदरवर्तिनः ।
सर्वे जीवाः समीहन्ते शाश्वतं सुखमुत्तमम् ॥ ८७ ॥
तत्स्वरूपं न जानन्ति जानन्तश्चापि मोहतः ।
अशाश्वते सुखाभासे क्षपयन्ति निजायुषम् ॥ ८८ ॥
तत्तत्कर्मवशाज्जीवो चक्रवर्तिमहेन्द्रताम् ।
अनुभूयापि रङ्कत्वं कीटत्वं लभते पुनः ॥ ८९ ॥

पुनस्तत्त्वं पुनस्तत्त्वं चक्रिचक्रमिवानघ ।
भ्राम्यन्युगं युगं द्रष्टु-मीष्टेऽदृष्टं न मोघदृक् ॥ ९० ॥
तत्त्वमत्र न ते दृष्ट्वा प्राज्यं राज्यं महाजनाः ।
हित्वा बभूवुः श्रूयन्ते मुण्डिनोऽथ सहस्रशः ॥ ९१ ॥
न चास्ति बहु वक्तव्यं बहूक्तं पूर्वसूरिभिः ।
पराक्रान्ते परैरर्थे पिष्टपेषणवद्भवेत् ॥ ९२ ॥
मार्गं संन्यासमेवाहुर्गम्यं मोक्षं महाजनाः ।
येन यं प्राप्य न भवेत् परावृत्तिश्चतुष्टये ॥ ९३ ॥
तस्मात्त्वमपि चारित्रं लात्वा सफलय प्रिय ।
मानवत्वं न काचेभ्यो प्रतियच्छसि हीरकान् ॥ ९४ ॥
मोहनर्षेरिमां वाचं श्रुत्वा बुध्वा तदैव हि ।
हेमचन्द्रोऽर्थयां चक्रे दीक्षायै मोहनं मुनिम् ॥ ९५ ॥
बुद्धं चाचलसम्यक्त्वं ज्ञात्वा सोऽथ महामुनिः ।
गत्वा राजमुनेः पार्श्वं कुरु वत्स समीहितम् ॥ ९६ ॥
दिदेश हेमचन्द्रोऽपि गत्वा रत्लामपत्तनम् ।
श्रीमद्राजमुनेः पार्श्वे दीक्षामङ्गीचकार सः ॥ ९७ ॥
चारित्ररत्नसंपर्कात् प्रवृद्धयशसो मुनेः ।
यशोमुनेरभूच्छिष्यः प्रसन्नात्मा महामनाः ॥ ९८ ॥
यद्यप्यनेहसो दोषान्न सिद्धिं यास्यसि ध्रुवम् ।
अनन्तरे भवे साधो तथाप्यमरतां व्रजेः ॥ ९९ ॥

इत्यर्थं नाम तस्याभूदमरो मुनिसंयुतः ।
प्रथमाक्षरहेयत्वं नाम्न्यस्मिन्नेव दृश्यते ॥ १०० ॥
मोहनर्षिरपि स्थित्वा कतिचिद्वासरान्पुनः ।
माण्डवीबन्दराल्लाल-बागमध्यगमत्सुखम् ॥ १०१ ॥
आगतः श्रावको भव्यस्तस्मिन्संस्नेहमावहन् ।
भावपत्तनवास्तव्यो धर्मध्यानपरायणः ॥ १०२ ॥
कार्यदक्षः स एवास्ति दीक्षादक्षो बभूव यः ।
मोक्षातिरिक्तकार्याणां क्षणिकत्वादकार्यता ॥ १०३ ॥
यद्वा लोकेऽपि यः कश्चि-दुःसाधं कार्यमुद्वहन् ।
अन्यैः साधारणैर्दक्षो गीयते तदसाधकैः ॥ १०४ ॥
तेनाप्यसाध्यं यत्किंचित् कार्यमस्ति महीतले ।
तत्साधयञ्जनस्तेन दक्षोऽयमिति गीयते ॥ १०५ ॥
कार्यस्य तारतम्येन लौकिकस्यापरस्य च ।
कर्तॄणामुच्यते तार--तम्यमेवं परस्परम् ॥ १०६ ॥
किञ्चिन्निरूपितं तस्मिन् दक्षत्वं चापरं तथा ।
एवं दक्षोऽप्यदक्षश्च दक्षो नैकान्ततो भवेत् ॥ १०७ ॥
तारतम्यस्य विश्रान्तिर्मोक्षे तत्साधने तथा ।
एवं तत्साधको दक्षः सर्वदक्षशिरोमणिः ॥ १०८ ॥
एतद्यथार्थसंवेग-शालिनोऽस्य महामतेः ।
वाक्यं श्रुत्वा ययाचेऽसौ दीक्षां श्रावकसत्तमः ॥ १०९ ॥

तमपि श्रावकं रत्ला–मपुरं गन्तुमुक्तवान् ।
दीक्षार्थिनमयं भावनगरस्थं महामुनिः ॥ ११० ॥
सोऽपि तदाज्ञया गत्वा ललौ दीक्षां महामुनिः ।
शिष्यो हेममुनेर्यद्वा हेम हेमैव किं बहु ॥ १११ ॥
तारसंवेगशालित्वान्नाम तारमुनिः कृतम् ।
तारतम्यप्रबोधत्वाद्वा हेममुनिना स्वयम् ॥ ११२ ॥
नन्तुं धर्मैर्लब्धकीर्तिं कृताऽनुमतकारितैः ।
किमग्निशरगोचन्द्र-चतुर्मास्यागमन्मुनिम् ॥ ११३ ॥
अस्यामपि चतुर्मास्यां तपांसि पूर्वतो ध्रुवम् ।
अधिकानि बभूवुर्वा न्यूनता हेतुतः कुतः ॥ ११४ ॥
पञ्चरङ्गितपः कैश्चित्कैश्चिच्च कर्मसूदनम् ।
नाम्ना चतुर्दशपूर्वं कैश्चिच्चक्रे जनैस्तपः ॥ ११५ ॥
अस्यैव मुनिराजस्य देशनातो महामतेः ।
कैश्चिदङ्गीकृतं पञ्चाणुव्रतं हर्षपूर्वकम् ॥ ११६ ॥
कैश्चिच्चतुर्थं वा कैश्चिदङ्गीचक्रे चतुष्टयम् ।
अन्यदन्यैस्तपोभेदं वक्तुं चावसरो लगेत् ॥ ११७ ॥
रचना विविधा संघैः शासनोन्नतिहेतवे ।
कृता यद्वा व्ययं नैव व्यर्थं कुर्वन्ति सज्जनाः॥ ११८ ॥
मेरोः पर्वतराजस्य रचना या बभूव सा ।
श्रोतृवक्तृविभेदेन न वक्तुं शक्यते मया ॥ ११९ ॥

मेरोः पर्वतराजस्य रचना रचनाचणा ।
बुलाकीदासतनय-चुन्नीलालादिभिः कृता ॥ १२० ॥
अष्टोत्तरशतं स्नात्रं चक्रुः सर्वाङ्गसंयुतम् ।
श्रावकाः साधुसान्निध्याद्यद्वा शुभपरंपरा ॥ १२१ ॥
वङ्गाभिजनमध्यस्थ-मुर्शिदाबादवासिनम् ।
बाब्वास्पदं बुद्धुसिंहं वीक्ष्यायातं महामुनिः॥ १२२ ॥
धर्मागारस्य माहात्म्यं दर्शयामास शास्त्रतः ।
उपदेशो ह्ययं नाम पात्रशक्तिविमर्शनम् ॥ १२३ ॥
श्रीमोहनमुनेर्वाक्या-द्बुद्धुसिंहोऽपि बुद्धिमान् ।
द्रागुद्बुद्धो हि संस्कारे स्मृतिर्नोद्बोधकं विना ॥ १२४ ॥
तस्यामेव समायां स विशालमतिसुन्दरम् ।
धर्मगृहं लालबागे कारयामास वेगतः ॥ १२५ ॥
निष्पन्नं गृहमयुत-द्वितयेनाति निश्चितम् ।
भूमौ धर्मार्थसर्वस्य मुक्तिचन्द्रस्य श्रेष्ठिनः ॥ १२६ ॥

धर्मं[1] श्रुत्वा श्रावकाः शुद्धसत्वा
रागद्वेषोद्भावनाविप्रकृष्टाः ।
अप्यायान्तं कार्तिकं मासराजं द्रष्टुं
लग्नाः प्रेमपात्रं जनानाम् ॥ १२७ ॥

---

१ 'शालिनी' वृत्तम्—लक्षणं तु " शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः " इति ।

[1]अखण्डभूमण्डलमध्यवर्तिनी
प्रोद्दण्डरागान्धतमोनिवर्तिनी ।
सम्यक्त्वसत्तत्त्वविराजितानना
जेजीयतां मोहनलालदेशना ॥ १२८ ॥

इति श्रीउत्तरमोहनचरिते द्वितीयः सर्गः समाप्तः॥१०॥

## तृतीयः सर्गः ।

परार्थं जन्म व्ययति विषयेषु न मुह्यति ।
यस्तस्य सफलं ज्ञानं नान्येषां स्वार्थसाधिनाम् ॥ १ ॥
व्यतीतायां चतुर्मास्यां धर्मसाधनपूर्वकम् ।
व्यवसायिप्रियः कालः कार्तिकोऽगाद्धसन्निव ॥ २ ॥
वाणिज्यार्थं वणिग्जातिः सीमार्थं नृपसूनवः ।
दिशो दिशो द्रुतं चेलुः प्रभाते पक्षिणो यथा ॥ ३ ॥
दिवानाथातितीक्ष्णांशुतप्तानां व्यवसायिनाम् ।
ररक्ष साहसं दक्षमच्छांशुः शर्वरीपतिः ॥ ४ ॥
क्षेत्राणि राजमार्गाश्च व्यापृताः पशुभिर्नृभिः ।
दर्शनीयतमा भान्ति नभस्तारागणैस्तथा ॥ ५ ॥
वनानि कुसुमैर्नानाजातीयैः पङ्कजैः सरः ।
नद्यः शोकादिव क्षीणा यद्वा कालो न कस्यचित् ॥६॥

---

१ इयमुपजातिर्वंशस्थेन्द्रवंशाभ्याम् ।

मुनिर्मोहनलालोऽपि विहारक्षमवासरान् ।
दृष्ट्वा गन्तुमनाः शुद्धं मुहूर्तमवलोकयत् ॥ ७ ॥
रामबाणाङ्कभूवर्षे वैक्रमे मुनिराडयम् ।
मार्गशीर्षे कृष्णपक्षे पञ्चम्यां शुभवासरे ॥ ८ ॥
विजहार ततः श्रीमान् शिष्यवृन्दसमन्वितः ।
विहारेणोपकारो हि श्राद्धानामात्मनस्तथा ॥ ९ ॥
श्रावकैः साश्रुभिस्तस्मिन् बहूक्तं स्नेहगद्गदैः ।
किंचित्कालमपि श्रीमन्नत्र स्थातुं प्रसीदतु ॥ १० ॥
स तानतिशयप्रेमजुषः प्रोवाच सादरम् ।
श्राद्धाश्चारित्रिणां नैव प्रमादो विहृतौ वरम् ॥ ११ ॥
भावयन्तो भवन्तोऽपि भावना भवभेदिनीः ।
यथाश्रुतं यथाशक्ति धर्म्ये ददतु मानसम् ॥ १२ ॥
संदिश्यैवं श्रावकेभ्यो विहरन्मुनिवन्दितः ।
श्रीमोहनमुनिः प्राप्तस्तावद्घायखलां मुदा ॥ १३ ॥
तत्रत्याः श्रावकास्तस्मिन्नहन्युत्साहपूर्वकम् ।
पूजां तीर्थकृतां चक्रू रचनां भावनां तथा ॥ १४ ॥
ततो विहृत्य मुनिराट् संघैः सद्भावसङ्गतैः ।
धर्म्यां वार्तां प्रकुर्वाणः सुखमायात्स दादरम् ॥ १५ ॥
श्यामात्मजस्य भीमस्य श्रावकस्य गृहेऽवसत् ।
एकां रात्रिं धर्मतत्त्वमायाताञ्श्रावकान् वदन् ॥ १६ ॥

तत्रापि श्रावकैस्तस्मिन् दिने पर्वदिने यथा।
पूजोपवाससत्कारप्रौषधादि शुभं कृतम्॥ १७॥
तत्रत्यैः श्रावकैः साकं मुनिर्मुनिजनाग्रणीः।
ततो विहृत्य सुखतो ह्याययौ माहिमं पुरम्॥ १८॥
संघोपरोधात्कालस्य स्वल्पत्वान्मुनिसत्तमः।
स्थितिं व्यधाच्च तत्रैव यद्वा का शीघ्रता मुनेः॥ १९॥
मुनिभास्करसंपर्कात् सा दोषाऽपि द्रुतं ददौ।
दृष्टिं श्रावकसत्वेभ्यो मुनीनां वाद्भुता गतिः॥ २०॥
पूजाप्रभृति सत्कार्यं तत्रत्या अपि चक्रिरे।
मुनीनामेष सत्कारो निस्पृहाणामथाथवा॥ २१॥
इतोऽप्यभ्युदिते सूरे विजहार महामुनिः।
समं श्रावकवृन्दैश्च गौरग्रामं समाययौ॥ २२॥
पूर्ववत्संघसत्कारशृङ्गाराचादिकं शुभम्।
तत्रत्यैः श्रावकैश्चक्रे मुनिराजसमागमात्॥ २३॥
मुनिभिः श्रावकैः सार्धमितोऽपि मुनिसत्तमः।
चलित्वेर्यापथिक्या द्रागगाद्बाईन्दरं पुरम्॥ २४॥
तत्रत्याः श्रेष्ठिनः श्राद्धाः पूजायाः संघसत्कृतेः।
मुनीनां देशनायाश्च लाभं लब्ध्वा मुदं ययुः॥ २५॥
ततोऽप्यथ विहृत्याथ चेलुः श्रीमोहनर्षयः।
समं मुनिवरैः संघैर्वसहीमाययुर्द्रुतम्॥ २६॥

५

मुनिराजाऽगमाच्छ्राद्धा हित्वान्यद्व्यवसायकम् ।
संघसत्कारपूजादौ लग्नास्तूर्णं यथासुखम् ॥ २७ ॥
ततस्तैः श्रावकैः सार्धं भक्तिभाग्भिर्महामुनिः ।
सातराशिं विहृत्यायादागाशीं श्रममन्तरा ॥ २८ ॥
तत्रत्याः श्रावका दृष्ट्वा ह्यायान्तं मुनिभास्करम् ।
पद्मानीव मुदं भेजुश्चिरदर्शनलालसाः ॥ २९ ॥
सप्रवेशोत्सवं तेऽथ मुनिराजं न्यवीविशन् ।
यद्वेदृक्समयस्तेषां भाग्यादेव हि लभ्यते ॥ ३० ॥
आष्टाह्निकोत्सवं युष्म—दाज्ञयारब्धुमिच्छवः ।
प्रार्थयाञ्चक्रुरिति ते बद्धाञ्जलिपुटास्तदा ॥ ३१ ॥
ओमित्यवक् स सश्लाघं देशकालविदग्रणीः ।
मुनिर्मोहनलालोऽपि यद्वा धर्मोपदेशकः ॥ ३२ ॥
पूजादिशुभकृत्यैश्च तृप्तेषु तेषु देशना ।
मधुरा मुनिराजस्य दध्नि यातेव शर्करा ॥ ३३ ॥
समाप्ते चोत्सवे तस्माद्विहृत्य सफलामगात् ।
ततः पालगढं तस्माद्वेणुं तस्माच्च बोरडीम् ॥ ३४ ॥
ग्रामेषु फनसाद्येषु ततः स विहरन्मुनिः ।
अलंचकार सद्भाग्यं दम्मणं ग्रामनायकम् ॥ ३५ ॥
ह्रस्वेषु वाऽथ दीर्घेषु यत्र यत्र मुनीश्वरः ।
चकार वसतिं तत्र सर्वत्र संघसत्कृतिः ॥ ३६ ॥

पूजाभृङ्गारदानादि बभूवाऽतिमनोहरम् ।
यद्वासीदस्य माहात्म्यं दुर्लक्षं किमपि ध्रुवम् ॥ ३७ ॥
आगच्छतस्तदा मोहमर्यीवास्तव्यसज्जनान् ।
भवद्भिर्गम्यतां गेहं स्वीयमित्युपदिष्टवान् ॥ ३८ ॥
निववृतिरे ते श्राद्धाः कथंचिच्छोकसंयुताः ।
यद्वा साधुवियोगो हि खलसङ्गइवार्तिदः ॥ ३९ ॥
शनैः शनैश्चरन्तस्ते विनिवृत्य पदे पदे ।
पश्यन्ति स्म मुनीन्यद्वा स्नेहरज्जुः सुदुर्भिदा ॥ ४० ॥
क्षिप्रं क्षिप्रं चलन्ति स्म मुनयः संयता अपि ।
मा गमंस्ते पुनरपि गेहिनः स्नेहकर्षिताः ॥ ४१ ॥
श्रीमन्मोहनलालाद्याः साधवः शंसितव्रताः ।
असक्ताश्च यतात्मानो वलसाडमथागमन् ॥ ४२ ॥
तत्रैकां रात्रिमास्थाय विजहुस्ते प्रगे सुखम् ।
क्षेत्रानुसारिणो यद्वा निवासा महतां ध्रुवम् ॥ ४३ ॥
नवसारीप्रभृतिषु विहरन्तस्तथान्वहम् ।
दिनैः कतिपयैरीयुर्निकषा सूर्यपत्तनम् ॥ ४४ ॥
आयातान्मोहनर्षींस्ते श्रुत्वा तच्छ्रद्धयान्विताः ।
दधुरानन्दसंदोहं स्फुरद्रोमाञ्चवलयः ॥ ४५ ॥
विश्वाविश्वं वृता यस्य शक्तिः कीर्तिमतल्लिका ।
सोऽलङ्कर्ता पुरं चेदं मोहमोहनमोहनः ॥ ४६ ॥

मुनिः श्वस्तद्यथाशक्ति यथाम्नायपुरःसरम् ।
तमानेतुं प्रगेऽस्माभिः सर्वैश्च श्रावकैर्ध्रुवम् ॥ ४७ ॥
तुर्यैरलंकृतैर्बालैर्वाहनैर्बलवद्रथैः ।
बलैश्च सज्जितैर्बाढं सार्द्धं गन्तव्यमादरात् ॥ ४८ ॥
भवितेत्यखिले तस्मिन् पत्तने घोषणा कृता ।
शासनोन्नतिसद्भावकृते चैतत्प्रकल्प्यते ॥ ४९ ॥
कदा सूर्योदयो भावी पर्वकल्पो महामुनिम् ।
येनायातं चिराद्भाग्याद्द्रक्ष्यामो विश्ववल्लभम् ॥ ५० ॥
इतिचिन्तापरास्ते तां शर्वरीं विषवल्लरीम् ।
प्रपेदिरे त्विवानिष्टां सा ह्यभूत्कल्पवल्लरी ॥ ५१ ॥
काश्चित्सद्रत्नजटितैश्चेलकैश्चीनजन्माभिः ।
परिष्कृत्य निजं देहं पतिभ्यः समदर्शयन् ॥ ५२ ॥
ऊचुश्चानेन वेषेण गन्तास्मो मुनिपुङ्गवम् ।
द्रष्टुं श्वस्तदयं प्रेक्ष्यो भवद्भ्यो रोचते न वा ॥ ५३ ॥
तेऽपि स्तनादिभागे तं चैलं संकुचितं बहु ।
दृष्ट्वा स्वयं प्रियाप्रेम्णेतस्ततश्चक्रुरञ्जसा ॥ ५४ ॥
परन्तु पतिपत्न्योर्यच्चित्तवृत्तिरभून्मुनौ ।
तस्मात्तस्यां विभावर्यां स्थूलिभद्रादयो जिताः॥ ५५ ॥
कपोलभित्तौ स्वच्छायां प्रियायाः पद्मपत्रिकाम् ।
केषांचिल्लिखतां याता दोषा दोषाविवर्जिता ॥ ५६ ॥

केषाञ्चिद्दम्पतीनां तु सहोपविशतामपि ।
चरित्रं मुनिराजस्य स्मरतां ब्रह्म निर्वृतम् ॥ ५७ ॥
स्फारहाराद्यलंकारोत्कारसंविग्नचेतसाम् ।
केषाञ्चिद्दम्पतीनां तु नाभून्मारविकारता ॥ ५८ ॥
इदमस्ति न्विदं नास्ति कुत आयास्यति प्रगे ।
इतिचिन्तावतां केषां चतुर्थव्रतमर्थतः ॥ ५९ ॥
ईदृशं तृणवन्मुक्त्वा सुखं दाम्पत्यसंभवम् ।
प्रव्रजन्ति महात्मानोऽमी धन्याः पशवो वयम् ॥ ६० ॥
इत्यध्यासवशानां तु केषांचिद्दैनिकाद्दमाद् ।
न तन्नक्तमभूत् क्वापि कामबाधाधमाधमा ॥ ६१ ॥
केषां कपोतभ्रातॄणां सङ्गमार्थमुपेयुषाम् ।
बहुधा यतमानानामपि सा तु विभावरी ॥ ६२ ॥
कुमारताराऽलंकारसम्भारोद्विग्नमानसैः ।
चञ्चलैः समयाभावात् स्त्रीजनैर्विफलीकृता ॥ ६३ ॥
केषाचिदर्द्धवृद्धानां श्लेषचेष्टाजुषां भृशम् ।
प्रतारणचणैर्मञ्जुरणद्भिर्वनिताजनैः ॥ ६४ ॥
मुनयोऽमी महात्मान आजन्मब्रह्मचारिणः ।
वयं त्वणुव्रतं नापि पालयामो यथायथम् ॥ ६५ ॥
इत्यादिसानुकूलैश्च प्रसंगैर्नर्मभावतः ।
मानहानिः कृता यद्वा महिला अपि ता वरम् ॥ ६६ ॥

कानि योषित्प्रकाण्डानि कदुष्णपवनादपि ।
बिभ्यन्तीति हेतुमुक्त्वा पतिभ्यश्छुटितान्यथ ॥ ६७ ॥
रतिभारसमाक्रान्तशरीराणां श्रमात्पते ।
निद्रातिशायिनी चेन्नो अस्माकं भविता ध्रुवम् ॥ ६८ ॥
दर्शनं मुनिराजानां प्रवेशसमयेऽद्भुतम् ।
अभावे जन्मपर्यन्तं तापो नैव गमिष्यति ॥ ६९ ॥
काश्चित्कुमुदकर्पूरवंशलोचनजालिका ।
सुधादुग्धशरच्चन्द्रचन्द्रिकाधवलाः स्त्रियः ॥ ७० ॥
ओष्ठगण्डक्षतभ्रान्त्या शिश्लिषुर्न पतीनथ ।
"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" ॥ ७१ ॥
मुग्धाः काश्चित्कदम्बाग्रकलिकाकुलकोमलाः ।
मुखाभां मलिनां वीक्ष्य हसिष्यन्ति सखीजनाः ॥ ७२ ॥
हेतोरस्मात्पतीनां ताः पादयोर्न्यपतन्मुहुः ।
तेऽपीत्यभिनवानन्दकदम्बामन्दमन्दिरे ॥ ७३ ॥
प्रसुप्ता इव नो नो नो किञ्चित्कालमुदीर्यताः ।
हसन्तोऽनुभवन्तश्च रसं कमपि तत्यजुः ॥ ७४ ॥
किं ब्रूमः प्रायशस्तस्मिन्पुरे श्रावकमण्डले ।
ईदृशैः कारणैः सर्वैः कृतं ब्रह्मव्रतं स्फुटम् ॥ ७५ ॥
उदितेऽथ रवौ ते तु विकसन्मुखपङ्कजाः ।
निर्ययुर्नगरात्तूर्णं मुनिराजपथं ययुः ॥ ७६ ॥

गुरून्मोहनलालांस्ते श्रावकाः श्रीधनाधिपाः ।
निर्गच्छन्ति समारोहादानेतुमद्य भूरिशः ॥ ७७ ॥
प्रसृता तत्क्षणादेव इति वाक् सर्वपत्तने ।
यद्वा तूर्यध्वनिः किं नो सुधर्मायां समाययौ ॥ ७८ ॥
द्रष्टव्या चाद्य संपत्तिः श्रावकाणां सुरावनाम् ।
इति ब्रुवन्तो धावन्तो सूर्यपत्तनवासिनः ॥ ७९ ॥
केऽप्यथोद्घाटितद्वारं स्वं मुक्त्वा पश्यतोहराः ।
आययुर्नहि पश्यन्ति किञ्चिद्विह्वलचेतसः ॥ ८० ॥
तेनायाताः पथा चौरा न पश्यन्ति स्म तद्धनम् ।
यद्वा यत्र मनोयोगस्तत्प्रत्यक्षमिति स्फुटम् ॥ ८१ ॥
काचित्स्तनौ पाययन्ती श्रुत्वा व्यतिकरं त्विदम् ।
ततएव दधावे द्राक् तथैवानावृतस्तनी ॥ ८२ ॥
काचित्स्नान्ती जनान्दृष्ट्वा धावतो द्राक् चचाल सा ।
तथा हेतुमजानन्ती गतानुगतिको जनः ॥ ८३ ॥
एवं यत्कार्यलग्ना ये ते तन्मुक्त्वा तदैव हि ।
आयाता नहि लभ्येत प्रायशो लभ्यमीदृशम् ॥ ८४ ॥
देवा अप्येतुमनसो रूपालंकारमानिनः ।
मानहानिं शङ्कमाना नायाता इति मन्महे ॥ ८५ ॥
यद्वा देवीर्विना गन्तुमुत्सहन्ते न ते क्वचित् ।
लज्जन्ते श्राविकाभ्यस्ता मानुषीभ्यः समन्ततः ॥ ८६ ॥

इतश्च श्रावकैर्मार्गः पताकाभिः समावृतः ।
असूर्यम्पश्यरूपाणां यद्वा रक्षाकृते नु किम् ॥ ८७ ॥
घण्टिकाध्वनिभिर्यद्वा पताकाहस्तपल्लवैः ।
आयान्तं मुनिराजं तमाह्वयन्तीव श्रावकाः ॥ ८८ ॥
बालान्त्रत्नैरलंकृत्य रथे संस्थाप्य सज्जिते ।
नानातूर्यानुगे नानाशास्त्रिभिः पत्तिभिर्वृते ॥ ८९ ॥
अग्रे कृत्वा निर्ययुस्ते स्वयं पद्भ्या महाजनाः ।
द्रष्टृभिस्त्वथ तर्क्यन्ते स्मेमे सर्वेषु वल्लभाः ॥ ९० ॥
श्राविकाः सज्जिता मोहं वहन्त्यस्तद्यशांस्यनु ।
गायन्त्यो निर्ययुर्भूयः कदम्बककदम्बकम् ॥ ९१ ॥
एवं सर्वाभ्य आयाता रथ्याभ्योऽतीव संस्कृताः ।
सामन्ताः किमु गच्छन्ति चक्रिजन्मदिनोत्सवे ॥ ९२॥
पटहैर्भेरिभिर्बाढं ताड्यमानैः परस्परम् ।
कृतस्पृहैरिवान्यैश्च तूर्यैर्गोरण्डजन्मभिः ॥ ९३ ॥
स्फारभङ्कारझङ्कारटङ्काराङ्कारनादिभिः ।
गुञ्जितं पूरितं खं नु शब्दाद्वैतं समादिशत् ॥ ९४ ॥
भूयोभूयो जयध्वानैर्यशोगानैश्च तत्क्षणम् ।
श्रावकैः श्राविकाभिश्च तत्तथैवानुमोदितम् ॥ ९५ ॥
दृष्ट्वा श्रावकजातीनां मोदं स मुमुदे मुनिः ।
कुमुदाना वनं यद्वा वीक्ष्य चन्द्रोऽपि मोदते ॥ ९६ ॥

अर्हं पूर्वमहं पूर्वमिति वानन्दकन्दलम्।
प्रणेमुर्मुनिराजं तं मुनिमण्डलमण्डितम् ॥ ९७ ॥
निःस्पृहैरपि निर्ग्रन्थैर्धर्मलाभपुरःसरम्।
स्वागतं पृच्छ्यते तैश्च तीर्थैः स्तुत्यः परस्परम् ॥ ९८ ॥
हर्षमुनिप्रभृतिभिः शिष्यैस्तैः श्रावकैर्वृतः।
लेभे चन्द्रमसः शोभां परीतस्य ग्रहर्क्षकैः ॥ ९९ ॥
शनैः शनैः समागत्य मुनिर्मुनिगणावृतः।
स सनाथां करोति स्म क्षमाचन्द्रस्य वाटिकाम् ॥१००॥
दृष्ट्वा परिषदं श्रेष्ठिजनानां महतीं मुनिः।
निर्ममे निर्ममश्चेत्थं तदानीं धर्मदेशनाम् ॥ १०१ ॥
अशोधितं विषं श्राद्धा भक्ष्यमाणं विषं भवेत्।
तत्सद्भिषक्संस्कृतं चेत्पुष्टिकारि रसायनम् ॥ १०२ ॥
एवं लक्ष्मीः प्रमत्तानां महानर्थप्रदायिनी।
सैव सद्विदुषां स्वर्गापवर्गस्यापि साधिनी ॥ १०३ ॥
श्रीमद्भिः कार्यते नैव भोगलोलुपमानसैः।
साधुभिः कष्टसाध्यं यत्तपस्तद्भावशङ्कया ॥ १०४ ॥
धनसाध्यं तु यत्कर्म तत्तेभ्य उपदिश्यते।
योग्यायोग्यविचारो हि प्रथमः सर्वकर्माणि ॥ १०५ ॥
तत्रापि विमुखाश्चेत्स्युर्लोभान्धाः सर्वहारिणः।
अजागलस्तनस्येव तेषां जन्म निरर्थकम् ॥ १०६ ॥

व्यापारो हि प्रियश्चेद्वो धनवृद्धिकरत्वतः ।
तदा धर्मक्रिया कार्या धर्म्मो व्यापारशेखरः ॥ १०७ ॥
व्यापारे खलु चान्यस्मिंल्लाभश्चेद्द्विगुणो भवेत् ।
कदाचिद्दैवयोगात्तद्वणिजां वर्धते मनः ॥ १०८ ॥
वर्धमानमनोभिस्तैर्व्याप्रियेत पुनः पुनः ।
कदाचिल्लुप्यते मूलमपि दुर्दैवयोगतः ॥ १०९ ॥
व्यापारोऽयं मदुक्तो हि लाभेऽनन्तगुणः स्मृतः ।
मूलहानेर्भयं नास्ति कदाचित्कस्यचित्कचित् ॥ ११० ॥
व्यापारं जहि न ब्रूमो लौकिकं किन्तु कालिकात् ।
अस्माद्धनमुपादाय क्षिप्यतां धर्मकर्माणि ॥ १११ ॥
युक्तिशास्त्रानुगं श्रुत्वा वाक्यं तैश्च तथा कृतम् ।
क्षणिकाच्छाश्वतस्याये लगेत्को न विचक्षणः ॥ ११२ ॥
प्रारब्धानि तदा तूर्णं देवागाराणि भूरिशः ।
निष्पन्नेषु प्रतिष्ठाभून्मुनिमोहनहस्ततः ॥ ११३ ॥
एतस्मिन्नन्तरे साधुः सुमतिः सुमतिर्मुनिः ।
कथावशेषतां प्राप्तः को वा कालस्य वल्लभः ॥ ११४ ॥
एकदा मोहनमुनिः सूर्यपत्तनप्रान्तिके ।
विहरन्दर्शनकृते ग्रामे कर्त्तारनामनि ॥ ११५ ॥
गतस्तत्र स्थितं देवमृषभं मूलनायकम् ।
दृष्ट्वा नत्वा मुदं प्राप्तो या मनोवागगोचरा ॥ ११६ ॥

जीर्णातिजीर्णं तद्दृष्ट्वा मन्दिरं मोहनर्षयः ।
तस्योद्धारकृते लग्नाः सत्सङ्कल्पा हि साधवः॥ ११७ ॥
व्याख्यानावसरे प्राह कस्मिंश्चिद्दिवसे मुनिः ।
पुण्यप्रसंगतस्तारतम्यं पुण्यस्य शास्त्रतः ॥ ११८ ॥
आनाय्य मन्दिराणां स प्रसंगं मुनिराडयम् ।
पुण्यं वर्णयितुं लग्नो यथोक्तं तीर्थनायकैः ॥ ११९ ॥
नूतनान्मदिरादष्टगुणं पुण्यं सुनिश्चितम् ।
जीर्णोद्धारे भवत्यत्र विसंवादो न कस्यचित्॥ १२०॥
तस्माद्धे श्रावका यूयं मिलित्वा कुरुत ध्रुवम् ।
तीर्थनाथादिनाथस्य जीर्णागारस्य चोद्धृतिम् ॥१२१॥
श्रुत्वा ते श्रावका भद्रास्तत्क्षणं पुण्यशालिनः ।
एकीकृत्य मतं लग्ना धर्मध्वंसो विरोधतः ॥ १२२ ॥
द्रव्यं लक्षार्धसंख्यातं तत्कृते तैस्तदा कृतम् ।
यद्वा मोहनभक्तानां पुरः किं नाम लक्षकम् ॥१२३॥
अस्मिञ्शुभोत्सवे सर्वे श्रेष्ठिनः कार्यकारिणः ।
अग्रेसराणां केषांचिदत्र नाम प्रदर्श्यते ॥ १२४ ॥
गुलाबचन्द्रोऽथान्यस्ति-लकचन्द्रस्तथैव च ।
भाईचन्द्रः फुलचन्द्रो देवचन्द्रस्तथाऽपरः ॥ १२५ ॥
हर्षचन्द्रात्मजो लल्लु--भाई श्राद्धास्तथापरे ।
द्रव्यैः श्रमैश्चात्र चक्रुः कर्माणि बहुधोद्यमम् ॥ १२६ ॥

एतेषामथ चान्येषां श्रावकाणां महोद्यमात् ।
आरब्धं तत्क्षणं कर्म किंवा द्रव्यैर्न साध्यते ॥१२७॥
श्रीमोहनमुनिः शिष्यांश्चतुरस्तत्र संस्थितान् ।
विहर्तुमुक्तवान्यद्वा विहारः साधुभूषणम् ॥ १२८ ॥
यशोमुनिर्हर्षमुनिर्जयाख्यो जीवनस्तथा ।
विहृत्य क्रमशो जग्मुर्भृगुकच्छं धृतव्रताः ॥ १२९ ॥
ततो विहृत्य तूर्णं ते कावीगन्धारनामनि ।
गता ग्रामे ततस्तद्वदामोदं प्रति प्रस्थिताः ॥ १३० ॥
गत्वा स्थित्वा पुनः प्रातः खम्भातबन्दरं ययुः ।
ऊषुर्द्वित्रान्महात्मानो वासरांस्तस्य भाग्यतः ॥१३१ ॥
ततो विहृत्य खेडाख्यग्रामादिषु यथाक्रमम् ।
निवसन्तो ययुः सर्वे पत्तनं राजपत्तनम् ॥ १३२ ॥
डोशीवाडापोलमध्ये क्वचिद्विद्यालये शुभे ।
तत्र ते निवसन्ति स्म मुनयो लब्धदर्शनाः ॥१३३॥
तेषां भाग्यवशात्तत्र संवेगरसकोमलः ।
श्रीमद्बुद्धिमुनेः शिष्य आनन्दविजयो मुनिः ॥ १३४ ॥
दृष्टो दृष्टानन्ददायी पन्यासास्पदसंस्कृतः ।
कृपालुः कर्मठः साधुस्तपागच्छीयभूषणम् ॥ १३५ ॥
दृष्ट्वा सुसमयं प्राप्तं योगक्षेमादिकं तथा ।
मुनिं कारयितारं तं यशोमुन्यादयोऽखिलाः ॥ १३६ ॥

कर्तुं लभाः क्रियाः शक्ति-साध्याः सर्वे मुनीश्वराः ।
यादृशस्तु भवेत्सङ्गो बुद्धिर्भवति तादृशी ॥ १३७ ॥
सूत्रकृताङ्गमारभ्य भगवत्या ऋते समः ।
योग उद्वाहितस्तेन सक्रियो यशसा सता ॥ १३८ ॥
कल्पसूत्रादिको योगः श्रीहर्षमुनिना तथा ।
कृतो यथाविधि श्लाघ्यः पार्श्वे तस्य महात्मनः ॥१३९॥
कृतो माण्डलिको योगो जयेन जीवनेन च ।
नयेन मुनिना यद्वा स्वीयहानिं क इच्छति ॥ १४० ॥
उज्मिकायाः श्राविकाया धर्मागारेऽतिविश्रुते ।
गुर्वी दीक्षा यथाम्नायमभूदेषां महात्मनाम् ॥ १४१ ॥
तत एभिस्त्रिभिर्योगः कृतः सर्वाङ्गसंस्कृतः ।
ततः सर्वे ययुर्वीर-विजयानामुपाश्रये ॥ १४२ ॥
तत्रत्याः श्रावका बालप्रेमचन्द्रादयो मुनीन् ।
दृष्ट्वा मुमुदिरे तप्ता यथायातान्बलाहकान् ॥ १४३ ॥
श्रीमोहनमुनौ तेषामुत्कण्ठा प्रबलाभवत् ।
एकसम्बन्धिनो ज्ञानमन्यसम्बन्धिचेतकम् ॥ १४४ ॥
आगम्यतां कृपाम्भोधे भक्ताभीष्टफलप्रद ।
कृतमित्यादि बहुधा पत्रद्वारा निवेदनम् ॥ १४५ ॥
तेषां निवेदनं दृष्ट्वा प्रचेलुर्मोहनर्षयः ।
भव्यानाभि व्रजन्त्येव मुनयो भक्तवत्सलाः ॥ १४६ ॥

विहरन्तो यथाग्रामं बोधयन्तोऽल्पकर्मकान् ।
दिनैः कतिपयैरीयुः समया राजपत्तनम् ॥ १४७ ॥
योऽभूत्क्रोशशतं दूरः स तद्दृष्टिपथं गतः ।
यद्वा यो भावतो दूरः स दूरो ग्रामगोऽपि सन्॥१४८॥
तत्रत्यैः श्रावकैर्बाढं यक्षराजानुकारिभिः ।
तत्प्रवेशोत्सवश्चक्रे सूर्यपत्तनतोऽधिकः ॥ १४९ ॥
सर्वैरेकमुखं चोक्तं वृद्धैर्वृद्धतमैरपि ।
ईदृक् कदाचिन्नो दृष्टो मुनिसामायिकोत्सवः ॥ १५० ॥
तस्मिन्प्रविशति ग्रामे वृष्ट्या त्वेकेन्द्रिया अपि ।
हसन्तः प्रोत्सहन्ते स्म पञ्चाक्षाणां तु का कथा ॥१५१॥
वर्षाकालादभूद्वृष्टि रितिशङ्का न भाव्यताम् ।
तदानीं चैत्रमासत्वात्कल्प्यस्त्वतिशयः खलु ॥१५२॥
श्रीमोहनमुनिर्वीर-विजयानामुपाश्रये ।
चकार वसतिं शिष्या-मन्दवृन्दकदम्बपः ॥ १५३ ॥
संसारसारासारत्वधीरनर्थार्थकारिणी ।
तस्मात्सारत्वधीभ्रान्तिर्हेया सज्ज्ञानचक्षुषा ॥ १५४ ॥
संसारस्य त्वसारत्वमन्वयव्यतिरेकतः ।
स्पष्टीकृतं सूरिवर्यैरभ्यस्तव्यं पुनः पुनः ॥ १५५ ॥

१ संसारे सारत्वबुद्धिरनर्थकर्यसारत्वबुद्धिरर्थकरी । तस्मात्तत्र सारत्वधी-भ्रमो विवेकवता हेय इति निष्कृष्टोऽर्थः ।

अयमात्मा परानन्दस्वरूपः पूर्णकामकः ।
स्वानन्दानुभवे चास्य नान्येषां सहकारिता ॥ १५६ ॥
आनन्दस्तु स एवास्ति निरवच्छिन्नधारतः ।
शब्दस्पर्शादिजन्योऽपि तस्यैवेति विचार्यताम् ॥१५७॥
तद्भिन्नस्य जडत्वेन हेतुत्वमविवेकतः ।
भासते कुक्कुरस्याऽपि रक्तपानेऽस्थि कारणम् ॥१५८॥
अस्तु वा क्षणिकोऽप्येष तत्समक्षं तृणायते ।
तुच्छत्वात्क्षणिकत्वाद्वा पदार्थान्तरयोगजात् ॥१५९॥
इत्याद्यनेकधा तत्र निर्ममे निर्ममो मुनिः ।
देशनां मोहनो यद्वा वक्तॄणां प्रथमो न किम् ॥१६०॥
इत्युक्तिं मुनिराजस्य श्रुत्वा श्रेष्ठिजनाः खलु ।
लालो मनःसुखाद्याश्च मोदमापुरलौकिकम् ॥ १६१ ॥
आयाताथ चतुर्मासी जनानन्दप्रदायिनी ।
गच्छन्तं मुनिराजं सा तत्र स्थापयितुं किमु ॥ १६२ ॥
प्रतापामरयोस्तत्र योगोद्वाहनपूर्वकम् ।
यशोमुनिर्यथाम्नायं छेदोपस्थापनं व्यधात् ॥ १६३ ॥
लवारपोलमध्ये च चातुर्मास्यार्थमाग्रहात् ।
तत्रत्यश्रावकाणां श्री–यशोमुनिरुवास ह ॥ १६४ ॥
मुनिभिः सप्तदशभिर्भव्यैर्दान्तैस्तपःकृशैः ।
समं श्रीमोहनो वीर–विजयानामुपाश्रये ॥ १६५ ॥

चतुर्मास्यां यथाचारं श्रावकैः श्रमशालिभिः ।
समवसरणं चक्रे दर्शनीयतमं तदा ॥ १६६ ॥
कस्यचिच्छ्रेष्ठिनो भार्या गङ्गा गङ्गेव निर्मला ।
द्वादशव्रतमादद्रे प्रत्याख्यानपुरःसरम् ॥ १६७ ॥
प्रेमचन्द्रादयः श्राद्धा बहवो ब्रह्मचारिणः ।
बभूवुर्नाम्न उल्लेखे तेषां ग्रन्थो गुरुर्भवेत् ॥ १६८ ॥
तपोदानप्रभृतिभिरन्यैश्च शुभकर्मभिः ।
शासनस्योन्नतिस्तस्मिन्वर्षेऽभूत्सर्वतोऽधिका ॥ १६९ ॥
अथ च सकलसंघं प्रार्थयामास गन्तुं
व्यपगतमदमोहो मोहनो मोहभेदी ।
अखिलजनसमानां रीतिरेषा मुनीनां
भवति चरणसारः कार्तिकान्ते विहारः ॥ १७० ॥
इति श्रीउत्तरमोहनचरिते तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ।

श्रीमत्या लोकसाक्षिण्या यया लोकोपकारिता ।
कारिता सा जगन्माता लोके तिष्ठतु भारती ॥ १ ॥
चतुर्मास्यां व्यतीतायां श्रीमोहनमहामुनिः ।
श्रीसिद्धपुरमुद्दिश्य गन्तुमैच्छद्विहारतः ॥ २ ॥

---

१ 'मालिनी' वृत्तम् । लक्षणं त्वभिहितमेव पूर्वम् ।

अस्मिंश्चावसरे श्रेष्ठी जयसङ्केतिनामकः ।
तद्भक्तप्रथमस्तस्य पादयोर्न्यपतद्भृशम् ॥ ३ ॥
उवाच च महाराज निजवाक्यसुधारसैः ।
कतिचिद्दिवसान्भूयो भक्तानस्मान्कृतार्थय ॥ ४ ॥
भवदीयप्रसंगेन कर्त्तुमिच्छामि हे गुरो ।
यथाशक्ति शुभं कृत्यं भाग्याद्भावत्कसङ्गमः ॥ ५ ॥
श्रुत्वा तद्वचनं भक्तिरससार्द्रं मुनीश्वरः ।
धर्मकृत्यनिमित्तं च मोहनर्षिर्विचारवान् ॥ ६ ॥
तस्यैव वाटिकां रम्यां दीर्घां ग्रामटिकामिव ।
अध्यास्ते स्माथवा भक्तिपाशा कापि विलक्षणा॥ ७ ॥
कर्त्तव्यमस्ति धर्म्यं यत्कर्त्तव्यं तद्द्रुतं द्रुतम् ।
आदिदेश निजान्भक्तान्प्रफुल्लमुखपङ्कजान् ॥ ८ ॥
आरेभिरे ततस्तेऽपि शुभकृत्यानि भूरिशः ।
यस्य भूरितरं द्रव्यं तस्य कास्ति विलम्बिता ॥ ९ ॥
गिरिराजप्रतिकृतिः कृत्रिमापि प्रधानतः ।
रचनाभक्तितो जाता दर्शनीयतमाधिका ॥ १० ॥
शान्तिस्नात्रोत्सवो यादृग्रथयात्रा च यादृशी ।
अभूत्तदानीं नो भूता भविष्यत्यपि भाग्यतः ॥ ११ ॥
बभौ च शासनं तस्मिन्काले कालाद्भुतं भृशम् ।
यद्वा श्रीमोहनर्षीणां काले कालः कलिर्नहि ॥ १२ ॥

ज्ञानोत्सवप्रसङ्गेन दिदेश मुनिपुङ्गवः ।
देशनां कर्मतन्तूनां तीक्ष्णां कर्त्तरिकामिव ॥ १३ ॥
बहुभिः प्राणिभिस्तु स्वी-चक्रे बहुविधं व्रतम् ।
करिष्याम इति ध्यातं बहुभिश्चान्तरायिभिः ॥ १४ ॥
युगबाणाङ्कभूवर्षे श्रीमोहनमुनिस्ततः ।
विजहार सदानन्दकन्दः शिष्यगणान्वितः ॥ १५ ॥
आयान्तं मुनिराजं तं शिष्यवृन्दसमान्वितम् ।
श्रुत्वा ययुः सतूर्यं द्राक् पेथापुरनिवासिनः ॥ १६ ॥
तत्रापि श्रावकैरङ्गी-चक्रे बहुविधं व्रतम् ।
यथाशक्ति यथाभक्ति प्रत्याख्यानपुरस्सरम् ॥ १७ ॥
उपधानक्रिया तत्र कारिता विधिपूर्वकम् ।
श्रीमहाराजशिष्येण यशोमुनिमहात्मना ॥ १८ ॥
एतदन्ते च संघेन कृतश्चाष्टाहिकोत्सवः ।
निस्सारितोऽतिसंरम्भादपूर्वो वरघोटकः ॥ १९ ॥
कतिचिद्दिवसांस्तत्र स्थित्वा श्रीमोहनर्षयः ।
विजहुः साधवः प्रायो न प्रमाद्यन्ति शक्तितः ॥ २० ॥
राधेजा--कडि--वास्तव्यान्बोधयन्स महामुनिः ।
यात्रार्थं भोयणीं गत्वोवास द्वित्रांश्च वासरान् ॥ २१ ॥
ततो विहृत्य मैशाणां नगरीं प्रवरां ययौ ।
तत्रापि श्रावकांश्चक्रे देशनावारिनिर्मलान् ॥ २२ ॥

ततो धृतमहाशक्तिर्विहृत्य मुनिनायकः ।
रणुञ्जं पावयामास ग्रामं तत्त्वविदग्रणीः ॥ २३ ॥
ततो विहृत्य धीणोजं ततः पट्टणपत्तनम् ।
निकषा मुनिभिः सार्द्धं मुनिराजोऽयमाययौ ॥ २४ ॥
तदा पट्टणवास्तव्यैः श्रावकैः श्रेष्ठिराजकैः ।
सूरतादुत्तमस्त्वग्रे–गन्तुको वरघोटकः ॥ २५ ॥
निस्सारितो य आश्चर्य–पदवीं प्राप दर्शकात् ।
तत्र चान्यत्र तादृङ् नाभूत्प्रागिति जनश्रुतिः ॥ २६ ॥
चैत्रे मासि सिते पक्षे द्वादश्यां सत्क्षणे मुदा ।
चकारोपाश्रये वासं दयासागरसंज्ञके ॥ २७ ॥
आयाता बहवस्तत्र श्राद्धाः सद्भावभाविताः ।
श्रवणार्थं मुनेर्वाक्यं धर्म्यं धर्मोपदेशकात् ॥ २८ ॥
संसारासक्तचित्तांस्तान्दृष्ट्वा क्लेशजुषो भृशम् ।
आत्मीयत्वाभिमानेनात्मीयदुःखेन दुःखितान् ॥ २९ ॥
दयासिन्धुः सुधासिन्धुं व्याजहार वचोऽद्भुतम् ।
दृष्टान्तरूपतस्तेषां शीघ्रबोधाय मोहनः ॥ ३० ॥
तथाहि वसुधाभालतिलकं वापरालका ।
ललनाललितालापपराजितपिकध्वनिः ॥ ३१ ॥
पुरी श्रीमथुरानाम्नी विश्रुतास्ति सुविस्तरा ।
यत्र नेत्राञ्जनैर्ध्वस्तं धावल्यं श्रीयमस्वसुः ॥ ३२ ॥

तत्रासीन्मलयो नाम वणिक्कश्चिद्वणिग्वरः ।
शीतला सुभगा तस्य भार्या प्रकृतिशीतला ॥ ३३ ॥
अभूल्लोकोत्तरं प्रेम तयोः सम्पृक्तचेतसोः ।
उदारमनसोः सङ्गो दम्पत्योर्नाल्पपुण्यतः ॥ ३४ ॥
अत्युद्योगवतोऽप्यस्य मलयस्य तया समम् ।
भुञ्जानस्य गतो भूयान्कालो वैषयिकं सुखम् ॥ ३५ ॥
आयाते समये पुण्ये शुभकर्मोदये सती ।
शीतला गर्भमाधत्त वंशं वंशलता यथा ॥ ३६ ॥
एतस्मिन्नन्तरे कस्मिंश्चिद्देशे कालभवतः ।
व्यापारं चलितं श्रुत्वा मलयोऽवक् प्रियां निजाम् ३७॥
अनुजानासि चेद्बाले तदा तत्र व्रजाम्यहम् ।
वणिजो न पदं गन्तुं शक्ता भार्याज्ञया विना ॥ ३८ ॥
सा तु तं लोभसंविग्नं दृष्ट्वा गच्छेति हर्षतः ।
आज्ञापयाञ्चकारासौ चचाल त्वरितं ततः ॥ ३९ ॥
सम्प्राप्ते दशमे मासे सुषाव शीतला लता ।
पुत्ररत्नं यथा पुष्पं रम्यं सर्वाङ्गसुदरम् ॥ ४० ॥
द्वादशे दिवसे मात्रा महोत्सवपुरस्सरम् ।
पुष्पचन्द्र इति ख्यातिर्विदधे तनुजन्मनः ॥ ४१ ॥
ववृधे पुष्पचन्द्रोऽपि यथा चन्द्रोऽसितेतरे ।
प्रकृष्टबालचेष्टाभिर्मात्रानन्दप्रवर्द्धनः ॥ ४२ ॥

रोदनैः कूर्दनैर्हास्यैरव्यक्ताक्षरभाषणैः ।
बालस्य शीतला तन्वी ननन्द नन्दनाप्रिया ॥ ४३ ॥
नन्दनानन्दकन्दानु-भवने सादरं मनः ।
अलगद्या न जानाति प्रभाकरगतागते ॥ ४४ ॥
अथ कैशोरसंभाव्यक्रीडनैर्धूलिधूसरः ।
वयस्यैश्च समं युद्धैरपराधनिवेदनैः ॥ ४५ ॥
दीयतां दीयतामेतदित्यनल्पप्रजल्पनैः ।
पुष्पचन्द्रो निजाम्बाया मन आनन्दयद्भृशम् ॥ ४६ ॥
शीतलापि च नो वेद पुत्रमण्डनतत्परा ।
गतं भूरितरं कालं दुःखं प्रियवियोगजम् ॥ ४७ ॥
पुत्रं बुद्ध्वा पटुं पट्वी निवेशयितुमादरात् ।
दिदेश विद्याशालायां भृत्यांस्तदनुयायिनः ॥ ४८ ॥
इतश्च मलयः श्रेष्ठी सुखं प्राप्य समीहितम् ।
देशं लग्नः स्वोद्यमे हि वणिक्पाण्डित्यमद्भुतम् ॥ ४९ ॥
सुव्यापारयतस्तस्य सुकर्मोदययोगतः ।
प्रावर्त्तिष्टायधाराथ निरवच्छिन्नरूपतः ॥ ५० ॥
आगन्तुकामोऽप्यागन्तुं नाशक्नोद्भूरिलाभतः ।
आत्मत्यागाद्धनं वाथ चेष्टमानो वणिग्वरः ॥ ५१ ॥
कदाचिदल्पलाभस्य समयं मलयो वणिक् ।
वीक्ष्यागन्तुं चेहमानो मुहूर्तं निश्चिनोति चेत् ॥ ५२ ॥

तस्मिन्नेव दिने प्रायः कोऽपि सल्लाभसूचकः ।
समाचारः कुतोऽप्येति स्मास्य सङ्कल्पमर्दनः ॥ ५३ ॥
कदाचिदन्यथैवायं विप्रलम्भकवाक्यतः ।
वर्षं वर्षं व्यतीयाय लोभोपहतचेतनः ॥ ५४ ॥
एवं कारणयोगेन मलयस्योपपत्तितः ।
चतुर्द्दश समा याताः सुखकालदशेदृशी ॥ ५५ ॥
एकदा शीतला प्रैषीत्पत्रं काव्यं स्वहस्ततः ।
निर्माय स्वस्य पत्युः किं मोहभेदनपात्रिणम् ॥ ५६ ॥
विरागी चेत्पते ब्रूहि धनार्थं क्लिश्यसे कथम् ।
विषयी चेदसि ब्रूहि किं परं दारसौख्यतः ॥ ५७ ॥
प्रियावाक्यं द्विधैकार्थं चिन्तयित्वाकरोद्दुतम् ।
आगन्तुं यावदायातस्तावत्संवाद ईदृशः ॥ ५८ ॥
आगामिनी न योग्यास्ति शरदुद्योगशालिनाम् ।
यतः समर्घतावश्यंभाविनी श्रूयतेऽत्र हि ॥ ५९ ॥
मलयोऽपि गृहीतात्य–न्तव्यापारो मनस्यथ।
विचचार न गन्तव्यं विक्रेतु यत्न उद्यताम् ॥ ६० ॥
एवं संविग्नधैर्यस्य विक्रेतुं दत्तचेतसः ।
प्रख्यातधनिनो मासा व्यतीयुस्तत्र पञ्चषाः ॥ ६१ ॥
परं यदा यदा श्रेष्ठी स्मरति स्वां प्रियां तदा ।
तदा ममास्ति गन्तव्यमिति व्याहरति स्फुटम् ॥ ६२॥

एवं तद्वचनं भूयोभूयो न्यक्कारकारणम् ।
तस्याभूदिति च प्रष्टुं लग्नास्ते गमनं कदा ॥ ६३ ॥
वृद्धेन तस्य भृत्येन प्रोक्तं श्रेष्ठिन्ममापि च ।
इच्छास्ति व्रज पश्यामो देशं पुत्रादिशोभितम् ॥६४॥
व्यापारस्य न चान्तोऽस्ति न लोभस्य दुरात्मनः ।
निश्चितेऽर्थे विलम्बेन दिनं वर्षायते न किम् ॥ ६५ ॥
वृद्धस्य योग्यसाचिव्यात्तदा निववृते मनः ।
मलयस्य महारम्भस्येव मोहनवाक्यतः ॥ ६६ ॥
वृद्धभृत्येन सार्द्धं स चचाल मलयो वणिक् ।
पुस्फोर गच्छतस्तस्य नेत्रं वामं सदक्षिणम् ॥ ६७ ॥
इतश्च शीतला साध्वी मलयोत्सुकमानसा ।
प्रतीक्ष्य बहुशो मासान्पत्रप्रेषणतोऽपि सा ॥ ६८ ॥
आकार्य तनयं पुष्पचन्द्रं प्राह शुभाशया ।
पुत्र ते पितुरद्यापि व्यापारो नान्तमृच्छति ॥ ६९ ॥
अस्ति भूरितरं द्रव्यं लोभसीमा न विद्यते ।
तत्तवानुमतिश्चेत्स्यात्तमानेतुमहं यते ॥ ७० ॥
पुष्पचन्द्रो महाप्राज्ञः सहर्षं प्राह मातरम् ।
कृतमन्येन यत्नेन मातर्गच्छाम्यहं ननु ॥ ७१ ॥
मात्रोक्तं चेद्धि भीतिर्नो गच्छ पुत्र यथासुखम् ।
शिवास्ते सन्तु पन्थानः पित्रोरालम्बदायक ॥ ७२ ॥

सहर्षं गच्छतस्तस्य सध्रीचीनोऽभवच्छिशुः ।
एतस्यैव पिता वृद्धो मलयस्याग्रसेवकः ॥ ७३ ॥
शिशोरपि महाप्रीतिरदृष्टे पितरि ध्रुवम् ।
समकार्यौ समायुष्कौ जग्मतुः स्नेहिनौ तु तौ ॥७४॥
सुखं स्राग् गच्छतोः पुष्पचन्द्रस्य च शिशोस्तथा ।
आयाता वसतिर्मार्गे क्षुद्रा काननमण्डिता ॥ ७५ ॥
बालः प्राह पुष्पचन्द्रं न गन्तुं शक्यतेऽधुना ।
अग्रे काननमध्येऽत्र स्थातव्यं सुखपूर्वकम् ॥ ७६ ॥
ओमित्युक्ते पुष्पचन्द्रे शिशुर्लग्नो गवेषितुम् ।
गृहं रम्यं निवासार्थमैक्षच्चैकं यथातथम् ॥ ७७ ॥
पप्रच्छ च बहून्सर्वे प्रोचुरेतदिहोत्तमम् ।
अस्यापि वर्द्धते मूल्यं समवाये च श्रीमताम् ॥ ७८॥
शिशुः कार्यपटुः स्थातुं गृहस्वामिसमक्षकम् ।
मूल्येन तद्गृहं स्वीयप्रायं कृत्वा समागतः ॥ ७९ ॥
लात्वा मित्रं पुष्पचन्द्रं यावद्याति गृहान्तिकम् ।
गृहार्थं यतमानं स तावत्पश्यति वृद्धकम् ॥ ८० ॥
शिशुः प्राह गृहं वृद्ध गृहीतं गच्छ चान्यतः ।
पण्ये सर्वसमानेऽपि प्राग्यत्नैरनुभूयते ॥ ८१ ॥
वृद्धः प्राह व्रजान्यत्र बालस्त्वं वेत्सि किं बहु ।
पण्यं वस्तु न कस्यापि ऋते रूप्यमहेश्वरात् ॥ ८२ ॥

शिशुः प्राह वणिग्नीतौ नैतत्किञ्चाबलाजने ।
तस्मात्कदाग्रहं मुञ्च वृथा कालं न यापय ॥ ८३ ॥
वृद्धः प्राहात्र का नीतिः परकीये पदार्थके ।
अस्मै न क्रियतां क्लेशः शिरस्फोटफलावहः ॥ ८४ ॥
शिशुः प्राह जगन्माता नीतिः सर्वत्र वस्तुनि ।
स्वकीये परकीये वा वृद्धत्वं गमितं वृथा ॥ ८५ ॥
वृद्धः प्राह शनैरेव न नीतिं वेत्सि जल्पसि ।
नीतिर्नीतिविदामेषा कथञ्चित्कार्यसाधनम् ॥ ८६ ॥
शिशुः प्राह तथा वृद्ध जीव वर्षशतं पुनः ।
वयं कार्यकरा नैव स्वामिकार्यविरोधकाः ॥ ८७ ॥
वृद्धः प्राह गृहपतिमुद्दिश्य बहुवादिनम् ।
एनं निस्सार्य मां देहि द्रव्यं दास्यामि भूरिशः ॥८८॥
बालः प्राह गृहपतिं विक्रीते नाधिकारिता ।
अधिकं चेच्छसि द्रव्यं वध वृद्धं यथासुखम् ॥ ८९ ॥
किं वच्म्येवं विवदतोर्वृद्धशिश्वोः परस्परम् ।
प्रावर्त्तिष्ट क्षणाद्युद्धं दण्डादण्डि दलादलि ॥ ९० ॥
स्वामित्वात्स्वस्वपक्षत्वान्मलयपुष्पचन्द्रयोः ।
अप्यासीन्मुष्टिभिः पूर्वं केशाकेशि ततोऽन्तरम् ॥ ९१ ॥
एतस्मिन्नन्तरे राजदूताः तांश्चतुरो जनान् ।
क्षिप्तवन्तः समीकर्त्तुमिव गुप्तिगृहे द्रुतम् ॥ ९२ ॥

प्राता राजसमक्षं वो भविष्यति च निर्णयः ।
इत्युक्त्वा ते बहिस्तस्थुर्यावत्तावद्द्वितीयकः ॥ ९३ ॥
राजदूतः समायातो नामैषां पितृनामयुक् ।
पप्रच्छ ते यथातथ्यमाहुस्तत्प्रश्नपूर्वकम् ॥ ९४ ॥
अनन्तरं स पप्रच्छ ग्रामयोस्त्यक्तगम्ययोः ।
नाम तेऽपि प्राहुरस्माद्वृत्तान्ताच्चकितश्चरः ॥ ९५ ॥
सत्वरं ताञ्जहासोच्चैस्तेऽपि लज्जावशीकृताः ।
भ्रमादिति वदन्तः स्त्राग्लग्नाः प्रष्टुं परस्परम् ॥ ९६ ॥
श्रावका नो इतः पूर्वं पितृत्वतनयत्वयोः ।
सतोरपि समुत्पन्नो मोहः प्रेमनिबन्धनः ॥ ९७ ॥
संजाते नूतने स्वीयाभिमाने दुःखसद्मनि ।
समुत्पन्नो महामोहो मिथ्यारागनिबन्धनः ॥ ९८ ॥
सर्वे जीवा निजं कर्म्मफलं लोकानुसारतः ।
भुञ्जते लोकसम्बन्धः कल्पितः कलिलप्रदः ॥ ९९ ॥
अनित्ये कल्पिते जाले पतित्वा मूढमानवाः ।
क्षपयन्ति वृथा चायुर्वदन्ति वितथं बहु ॥ १०० ॥
पुत्रार्थं पुत्रपुत्रार्थं कश्चिदेवं प्रजल्पति ।
भ्रात्रर्थं भ्रातृपुत्रार्थं भार्य्यार्थं चेति केचन ॥ १०१ ॥
पण्डिताः कल्पितं मत्वा दृष्ट्वा च ज्ञानचक्षुषा ।
उज्झन्ति संसृतिं सार्द्धं कदाग्रहविकत्थनैः ॥ १०२ ॥

संसारमात्रे नो कार्या वासना भववर्द्धिनी ।
वासनाया महोरग्या दासो दासगणाधमः ॥ १०३ ॥
संगत्यागो महाधर्मो मोक्षप्राप्तिनिबन्धनम् ।
नाहं कस्य न मे कश्चिदात्मा दृश्यविलक्षणः ॥१०४॥
इत्याद्यनेकधा युक्त्या श्रीमोहनमुनिस्तदा ।
भिन्नवान्मोहसाम्राज्यं श्रोतॄणां कल्पपादपः ॥ १०५ ॥
देशनान्ते महाराजं प्रणम्य विनयाञ्जलिः ।
पेथापुरजनिः केश–वलालः प्रोक्तवानिति ॥ १०६ ॥
मुनिराज भवत्पादपद्म भाग्यातिरेकतः ।
लभ्यते हि तदर्थं च मया यत्नः कृतो बहुः ॥ १०७॥
अलंकृतं यदा पेथापुरं श्रीमद्भिरुत्सुकः ।
भूत्वा तदा भवत्प्राप्त्यै मया प्राप्तं पुरान्तरम्॥ १०८ ॥
पट्टणे श्रीमहाराज आगन्तेति जनश्रुतिः ।
श्रुत्वा तवागमात्पूर्वं पट्टणं सेवितं मया ॥ १०९ ॥
अद्य ते दर्शनं जातं पीतस्त्वद्वाक्सुधारसः ।
आशासे च भवत्पादात्कल्याणं च भविष्यति ॥११०॥
यथा दिश तथा कुर्यां पतितं मां समुद्धर ।
दयासिन्धो भवाम्भोधितारणे तरणिर्भवान् ॥ १११ ॥
दृष्ट्वा तमचलश्रद्धमल्पकर्मकटाहकम् ।
मुनिः प्रोवाच खेदं मा कार्षीः कल्याण सम्प्रति॥११२॥

कल्याणेति मुनेर्वाक्यं श्रुत्वा संघः समुज्जगौ ।
खेदः कोऽस्य महाराजो यं कल्याणं वदत्यहो ॥११३॥
संघेन च महच्चक्रे तस्य निष्क्रमणोत्सवम् ।
दीक्षां ददौ यथाम्नायं स श्रीमान्मोहनो मुनिः॥११४॥
अहो मुनिजनौदार्यं जनजातविलक्षणम् ।
कल्याणार्थी कृतः साक्षात्कल्याणो मोहनर्षिभिः॥११५॥
अभूदुद्योतस्य मुनेरयं शिष्यश्चरित्रिणः ।
यत्तपोंऽशुसमुद्योताज्जैनधर्मोऽपि दिद्युते ॥ ११६ ॥
चारित्रं प्राप्य कल्याणो लग्नस्तपसि संप्रति ।
अष्टौ वाराश्चकारासावुपवासं निरन्तरम् ॥ ११७ ॥
श्रीमोहनमुनिः कस्मिंश्चिद्दिने शिष्यसंवृतः ।
मेतराणाग्रामवर्यं जगाम तीर्थदर्शनात् ॥ ११८ ॥
पालणपुरवास्तव्याः श्रावका मङ्गलादयः ।
आयातास्तत्र मिलिता वन्दित्वा मोहनं मुनिम् ११९
गच्छ गच्छ महाराज श्रीपालणपुरं पुरम् ।
कतिचिद्दिवसांस्तत्रा–स्मद्भाग्याद्वस हे मुने ॥ १२० ॥
उत्कटां विनतिं तेषां विमुखां नाकरोन्मुनिः ।
विनतिर्नाम का यस्या वशे नायाति देवता ॥१२१ ॥
स स्थित्वा मासपर्यन्तं देशनासुधया बहून् ।
भव्यान्विबुधसामाज्याश्चकार मोहनो मुनिः ॥१२२ ॥

ततो विहृत्य क्रमत आयात्पट्टणपत्तनम् ।
भविष्यत्कार्यभावित्वाद्विलम्बं नाकरोदथ ॥ १२३ ॥
तथाहि समये कस्मिन्नात्मारामहामुनेः ।
शिष्यः कमल आचार्योऽलंचकार पुरीमिमाम्॥१२४॥
तदैकं शिष्यमुद्दिश्य नूनं मन्दिरवासिनाम् ।
कलहः सुमहानासीत्तदा स्थानकवासिभिः ॥ १२५ ॥
तस्माच्च कारणाद्बाधा महती वीरशासने ।
समायाता यथा संघ–भोजनादिर्दिवं गतः ॥ १२६ ॥
तां दृष्ट्वा महतीं बाधां संघौ तौ मोहनो मुनिः ।
आकार्य शान्तप्रवरौ चकार धर्मसोदरौ ॥ १२७ ॥
केषाञ्चिदत्र विषये वक्तव्यं नाविशत्खलु ।
श्रीमन्मोहनलालानां धन्यवादांस्तु ते ददुः ॥ १२८ ॥
श्रीमोहनमुनिस्तेषां विनयेन महामनाः ।
स्थातुं तत्र चतुर्मास्यां सयोगमोमवोचत ॥ १२९ ॥
ज्ञानागारं तत्र जीर्णं दृष्ट्वा तस्य मुनीश्वरः ।
उद्धारे मानसं कृत्वा भव्यबोधदिवामणिः ॥ १३० ॥
आयातेषु यथाकालं श्रेष्ठिवर्येषु भूरिशः ।
प्रसंगावित्प्रसंगेन तानभ्येवमुदाहरत् ॥ १३१ ॥
सर्वासां सम्पदां मूलं धर्ममाहुर्मनीषिणः ।
ज्ञानं धर्मस्य मोक्षस्य कारणं नात्र संशयः ॥ १३२ ॥

ज्ञानं रक्षद्भिराहोस्विज्जनयद्भिर्जनैर्यथा ।
न तथा बहु शुष्यद्भिर्धर्मो भवति रक्षितः ॥ १३३ ॥
तत्रापि नूतनान्मन्ये जीर्णोद्धारे महत्फलम् ।
एवं देवालयारम्भाज्जीर्णोद्धारेऽपि बुध्यताम् ॥ १३४॥
उपदेशमिमं श्रुत्वा मोतिचन्द्रात्मजः श्रुतः ।
कर्म्मचन्द्रस्तथा सर्वः संघः शक्तो हि तत्क्षणम्॥१३५॥
किञ्चित्किञ्चिद्ददौ भक्त्या धनं सत्कर्मसञ्चितम् ।
श्रद्धालुजनसंयोगे ह्यारम्भो न विलम्बते ॥ १३६ ॥
द्वाविंशतिः सहस्रं द्राग्रूप्यकाणां तदाऽभवत् ।
जीर्णोद्धारः प्रचलितो मोहनर्ष्युपदेशतः ॥ १३७ ॥
अयं च नियमस्तत्रापरः श्राद्धैश्च सर्वशः ।
कृतो दातव्यमस्माभिर्वर्षं वर्षमनुश्रुतम् ॥ १३८ ॥
केचिदेकं वर्षमध्ये द्वे केचित्त्रीणि चापरे ।
राजतानि प्रयच्छन्ति नियमः सोऽद्य वर्त्तते ॥१३९॥
इदं कार्यं जनिं प्राप श्रीमोहनमुनीशितुः ।
काले काले तथा चान्यैर्मुनिभिः संप्रवर्द्धितम् ॥१४०॥
इदानीं परिपुष्टत्वात्फलत्यद्भुतसौगमम् ।
अस्य प्रभावात्प्रथमं पट्टणं गीयतेऽधुना ॥ १४१ ॥
एकदा कालयोगेन कश्चित्तत्र यमातिथिः ।
संजातो वाथवैतद्धि नित्यं जन्मानुभाविनाम् ॥१४२॥

तस्य ये निकटा लोका मित्रं सम्बन्धिनस्तथा ।
स्वहस्तैस्तैरताड्यन्तोरांसि खं पवनैर्यथा ॥ १४३ ॥
रोदनं च तथा चक्रे हन्यमानैर्यथा गजैः ।
एवं बहुविधं घोरं कर्म दुर्बुद्धिशेखरैः ॥ १४४ ॥
वस्त्राणि च विरूपाणि धृतानि सर्वकैरपि ।
बीभत्सतमरूपाणि शोकरूपाणि तान्यहो ॥ १४५ ॥
किंचित्कालं तु सर्वस्मिन्देशे प्रायोऽबलाजनैः ।
क्रियते गुर्ज्जरे प्रायः सर्वैरात्मीयबन्धुभिः ॥ १४६ ॥
केचिच्च मासपर्यन्तं शोकं केचिच्च वत्सरम् ।
कुर्वन्ति बहवो यावज्जन्मावधि हतप्रभाः ॥ १४७ ॥
पृच्छायां ते वदन्त्येत्र देशरूढिरियं मम ।
प्रवर्त्तयन्ति कुहचिद्भृत्यानत्र च दैनिकान् ॥ १४८ ॥
दृष्ट्वा तेषां दुरध्यासवतां शोकं मुनीश्वरः ।
कथङ्कारममी ह्यस्मान्निवर्त्स्यन्तीत्यचिन्तयत् ॥ १४९ ॥
जडाज्ञानापनयनं दुस्साधमिति कथ्यते ।
रूढेः प्रचलितायास्तु त्यागोऽसाध्य इतीर्यते ॥ १५० ॥
यत्नस्त्वत्रापि कर्त्तव्यो यावद्बुद्धिबलोदयम् ।
असाध्यमिति कृत्वैव त्यागो नात्यन्तिको मतः ॥ १५१ ॥
तांस्तानग्रेसराञ्श्रीमान्मोहनर्षिरुदारधीः ।
आकार्य तत्त्वबोधेन चकार प्रथमं पटून् ॥ १५२ ॥

अनन्तरं वृथाभूतां कार्यहानिस्वरूपिणीम् ।
तां रूढिं शोकजननीं मोचयामास युक्तितः ॥ १५३॥
यद्यप्यद्यापि तद्रूढेर्मूलमस्ति तथापि तु ।
प्रचारस्तादृशो नास्ति दृष्टः सन्यो भयङ्करः ॥ १५४॥
अस्यामपि चतुर्मास्यां धर्म्मकृत्यानि पूर्वतः ।
अधिकानि कृतान्याहुरुपदेशप्रभावतः ॥ १५५ ॥
नानाविधानि दानानि तपांसि नियमानि च ।
बभूवुः सुखतस्तत्र चतुर्थादिव्रतानि च ॥ १५६ ॥
दृश्यं समवसरणस्यात्यर्थस्फारशोभनम् ।
रचितं श्रावकैर्भूरिद्रव्येणातिश्रमेण च ॥ १५७ ॥
सहर्षं कर्मभेदे यः पटुर्ज्ञानार्जने बटुः ।
कृतो धगधगध्वानोत्सव आष्टाह्निकोत्सवः ॥ १५८ ॥
भार्या चन्दननाम्नी श्री-मन्नलालाख्यश्रेष्ठिनः ।
मेना नाम्नी तथा यास्ति भार्या लल्लाख्यश्रेष्ठिनः॥ १५९॥
एताभ्यामग्रगन्त्रीभ्यां प्रशस्योत्साहपूर्वकम् ।
यथाम्नायं यथाचारमुपधानादिकाः क्रियाः ॥ १६० ॥
कृताः सार्द्धं समानाभिः श्राविकाभिर्यथासुखम् ।
आसीद्यशोमुनिस्तत्र प्रेरकश्चास्य कर्मणः ॥ १६१ ॥
श्रीहर्षहेमोद्योताद्यैर्मुनिभिः श्रीयशोमुनेः ।
महानिशीथकल्पाचा-राङ्गादेर्योगसाधनम् ॥ १६२ ॥

कृतं समाप्तिसमये श्राविकाश्रावकैर्भृशम् ।
मुमुदे देवपूजादि कर्म चक्रे सहोत्सवम् ॥ १६३ ॥
मोहच्छन्ना यज्ज्ञानश्री–रासीदिहाध्यासात्तेऽपि ।
बोधं प्रापुः सद्व्याख्यानैश्चन्द्रे दृष्टे का वा भ्रान्तिः॥१६४॥
इति श्रीउत्तरमोहनचरिते चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।

सन्तोषो वर्द्धते यस्य तृष्णा यस्य च दीयते ।
विवेकः स्फायते यस्य विषयैर्न स दूयते ॥ १ ॥
स्वस्तिमद्भक्तिमद्विश्वश्रेष्ठिमण्डलमण्डनः ।
नगीनः शाकलिः श्रीमन्मुनिमोहननन्दनः ॥ २ ॥
गुरोर्मोहनलालस्य देशनावाप्तसन्मतिः ।
निस्सारयामास महा–संघं शत्रुञ्जयव्रजम् ॥ ३ ॥
पञ्चपञ्चाङ्कभूमाने वैक्रमेऽब्दे शुभे क्षणे ।
मार्गशीर्षासिते भागे शुभायां दशमीतिथौ ॥ ४ ॥
महाद्भिः स्वपरीवारैः श्रीमोहनमुनिः सह ।
चचाल सघने संघे दत्तानन्दकदम्बकः ॥ ५ ॥
निर्विघ्नं सकलो जीवश्चकार तीर्थदर्शनम् ।
अथो हि सहगामी चेद्वक्रतुण्डोऽपि को भयः ॥ ६ ॥

१ 'विद्युन्माला वृत्तम् । तल्लक्षणं तु "मो मो गो गो विद्युन्माला" इति ।

श्राद्धानां गच्छतां मार्गे देशनामृतपायिनाम् ।
समये समये कालः कियानिति न संस्मृतिः ॥ ७ ॥
तस्माद् व्यावृत्त्य मुनिना श्रीसंघस्य महाग्रहात् ।
आसन्नकार्यभावित्वादितं पट्टणपत्तनम् ॥ ८ ॥
उवास मासपर्यन्तं देशनासुधया मुनिः ।
सिञ्चन्भव्यद्रुमान्कार्ये समीचीने प्रवर्त्तयन् ॥ ९ ॥
सूरिश्रीजिनदत्तश्रीजिनकुशलयोर्द्वयोः ।
खरतरगच्छीययोर्भूतपूर्वमहात्मनोः ॥ १० ॥
चरणप्रतिकृतिस्तु पीताम्बरतडागके ।
प्राचीनत्वादसाता सा दृष्टा श्रीमुनिपुङ्गवैः ॥ ११ ॥
अन्यत्रेयं गम्यते चेत्तदा साता भविष्यति ।
चिन्तयित्वा मनस्येवं देशनावसरे मुनिः ॥ १२ ॥
पूर्णचन्द्रात्मजं पन्नालालं श्रेष्ठिशिरोमणिम् ।
एतदर्थं विशेषेणो-पदिदेशमहामनाः ॥ १३ ॥
सोऽपि श्रेष्ठी तदादेशादात्मानं पुण्यभाजनम् ।
मन्यमानो द्रुतं प्रादाद्द्रव्यं दशसहस्रकम् ॥ १४ ॥
पत्तनाद्वाह्यदेशे तु सामलासविधे कृती ।
मन्दिरं कारयामास कुहचिद्रम्यकानने ॥ १५ ॥
एतस्य शुभकार्यस्य मुहूर्त्तं समकारयत् ।
बाबूजीवनलालेन पन्नालालात्मजेन हि ॥ १६ ॥

कार्ये चैवं विधे जाते भूरिशो मुनिवन्दितः ।
नवभिः सहितः शिष्यैर्विजहार शुभे क्षणे ॥ १७ ॥
माध्यस्थ्यवृत्तिधारित्वाद्ग्रामाद्ग्रामं मुनीश्वरः ।
विहरन्बोधयामास ग्रामीणानपि भूरिशः ॥ १८ ॥
चाणसे चैव गाभोरे बलोले मुनिपुङ्गवः ।
बहूनुद्बोधयामास कार्यं यद्वास्य हीदृशम् ॥ १९ ॥
राजपत्तनवास्तव्या विहरन्तं मुनिव्रजम् ।
गत्वा बहुविधं चक्रुर्विनयं सनयं शुभम् ॥ २० ॥
गम्यतां श्रीमहाराज भव्याम्भोजनभोमणे ।
कतिभिर्दिवसैश्चास्माञ्जानीह्युत्कण्ठितान्स्वके ॥ २१ ॥
राजपत्तनवास्तव्यैः पट्टणस्पर्द्धयेव किम् ।
अत्युत्साहभरः श्राद्धैः कृतः सामयिकोत्सवः ॥ २२ ॥
चकार श्रीमहाराजः संस्तरं सकलैः सह ।
सुप्रसिद्धतरे वीरविजयानामुपाश्रये ॥ २३ ॥
व्यतीतेषु मुनिं नन्तुं दिवसेषु कतिष्वपि ।
सूर्यपत्तनवास्तव्यः संघस्तत्र समाययौ ॥ २४ ॥
गत्वा नत्वा महाराजं धर्मचन्द्रस्तथा पुनः ।
नगीनदासश्चान्येऽपि भाइचन्द्रादयो भृशम् ॥ २५ ॥
विनिन्युर्बहुधा भक्त्या कृतप्राञ्जलयो ह्यमी ।
महाराजोऽपि धर्मज्ञ आगच्छाम्यहमित्यवक् ॥ २६ ॥

ततो जयध्वनिश्चक्रे सर्वैः श्रावकपुङ्गवैः ।
मुनिराजोऽपि तत्त्वज्ञो विजहार क्षणे शुभे ॥ २७ ॥
विहरन्क्रमयोगेन ग्रामं ग्रामं शनैः शनैः ।
एषा हि च मुनेर्वृत्तिर्यत्कुत्राप्यनिबन्धनम् ॥ २८ ॥
आयातो मुनिराजोऽयं खंभातनगरं प्रति ।
तत्रत्यैः श्रावकैः सर्वैः सोत्सवं स नतो नुतः ॥ २९ ॥
ततो विहृत्य मुनिराडामोदं मोदसंकुलम् ।
नगरं प्राप तत्रस्थाः श्राद्धा नेमुः पुनः पुनः ॥ ३० ॥
तेषां भावैः प्रसन्नात्मा श्रीमोहनमुनिः प्रगे ।
ततो विहृत्य क्रमशः प्राप्तो भरुचबन्दरम् ॥ ३१ ॥
तत्रापि श्रावकाः प्राप्ताः कदम्बककदम्बकम् ।
तैर्नतः संस्तुतः श्रीमान्धर्मलाभं ददौ मुदा ॥ ३२ ॥
ततोऽपि विजहारायं श्रीमोहनमुनिर्महान् ।
आयातान्समुवाचासौ धर्म्यं लोकद्वये शुभम् ॥ ३३ ॥
अमन्दानन्दसन्दोहभरैः सार्द्धं मुनीश्वरः ।
शिष्यवृन्दैः समायातो निकषा सूर्यपत्तनम् ॥ ३४ ॥
अथ सूर्यपुरस्थास्ते श्रावकाः शुश्रुवुर्मुनिम् ।
शिष्यवृन्दसमाच्छन्नं सुरतप्रान्तवासिनम् ॥ ३५ ॥
श्राद्धाः सर्वे प्रधाना ये सन्ति सूर्यपुरे परे ।
तैरेवं निश्चयश्चक्रे घोषितश्चाखिले पुरे ॥ ३६ ॥

ह्यः पूर्वतोऽधिको भावी प्रवेशस्य महोत्सवः ।
अतः सर्वैर्यथाचारमागन्तव्यमथो ध्रुवम् ॥ ३७ ॥
यथा पूर्वं ततोऽप्यत्र विशेषे नात्र संशयः ।
राजपुरपट्टनाभ्यां विशेषे का विचारणा ॥ ३८ ॥
अथ प्रभाते ते सर्वे महोत्साहपुरस्सरम् ।
दर्शयन्तो निजामृद्धिं मुनिराजमुपाययुः ॥ ३९ ॥
फाल्गुनस्य सिते पक्षे षष्ठयां श्रीमोहनर्षयः ।
विविशुः शासनं दीप्तं पश्यन्तः सूर्यपत्तनम् ॥ ४० ॥
वसतिं रायचन्द्रात्मभूप्रेमचन्द्रमन्दिरे ।
धर्मार्थे मुनिराजोऽयं समं शिष्यैश्चकार ह ॥ ४१ ॥
तत्र स्थित्वा मासमात्रं स्थानातिशयवेदकः ।
गोपीपुरे देवसुरगच्छीयोपाश्रयेऽविशत् ॥ ४२ ॥
माधवे धवले भागे श्रीमोहनमुनीश्वरः ।
वक्ष्यमाणानिमान्देवान्प्रतिष्ठाप्य जहर्ष ह ॥ ४३ ॥
श्रीसूर्यमण्डलपार्श्वं कुन्थुं तीर्थकृतं तथा ।
मनोमोहनपार्श्वं च साङ्गं सद्विधिपूर्वकम् ॥ ४४ ॥
जीर्णोद्धारस्तथा नव्यमन्दिरोद्भावनं च यत् ।
तादिदं मुनिराजस्य मोहनस्योपदेशतः ॥ ४५ ॥
जीर्णानि मन्दिराण्यासन्षट् कर्तारपुरे शुभे ।
तेषामस्योपदेशेन चोद्धारः समपद्यत ॥ ४६ ॥

प्रतिष्ठापि च्च तेषां श्रीमोहनर्षिकराब्जतः ।
अभूदेतेन श्रीसंघः परमानन्दमाप ह ॥ ४७ ॥
प्रतिष्ठेयं सिते पक्षे वैशाखे मङ्गले दिने ।
सर्वारम्भप्रसिद्धायां त्रयोदश्यामभूदिति ॥ ४८ ॥
संघस्यातिप्रसन्नत्वात्प्रभावाच्च महामुनेः ।
मन्दिरे द्रव्यलाभोऽभूत्सार्द्धत्र्ययुततोऽधिकम् ॥ ४९ ॥
सुरते श्रावका अस्य धनिनोऽभूवनाशिषः ।
किंवदन्ती त्वियं सत्या कूर्चे कूर्चेऽपि लक्षणम् ॥५०॥
स्वामिवात्सल्यकं संघभुक्तिः पूजादिकं तदा ।
सहोत्साहं यथाभूत्तद्भाग्यतो भविता पुनः ॥ ५१ ॥
अद्यापि ये स्मरन्त्येतत्कृत्यं मोहनसम्भवम् ।
सज्जनाः परितुष्यन्ति सन्तपन्ति दुराशयाः ॥ ५२ ॥
आयाताथ चतुर्मासी धरानन्दप्रवर्द्धिनी ।
तडित्तडतडध्वानैर्वादयन्ती स्वडिण्डिमम् ॥ ५३ ॥
धरासाररसास्वादलोलुपैः स्वार्थसाधुभिः ।
गौराङ्गै रौद्रचेतोभिर्वर्द्धमानैर्दिनेदिने ॥ ५४ ॥
रूपरम्यैर्भासमानैर्भास्करैरुपकारिभिः ।
इवाभितस्तप्यमानां परिणामावधिं गताम् ॥ ५५ ॥
वसुंधरां कराक्रान्तां शुष्यत्संतानवल्लरीम् ।
हुंकारैर्गड्गडध्वानैः प्रसरद्भिरितस्ततः ॥ ५६ ॥

मण्डलैः श्वासयन्तश्छा–दयन्तः कालका घनाः ।
आजग्मुरथवा कस्यातिशयो भवति ध्रुवः ॥ ५७ ॥
तूर्णं पूर्णं जलं मेघा बहुमानपुरस्सरम् ।
ददुर्दृष्टेऽथवा पात्रे विलम्बः केन हेतुना॥ ५८ ॥
वसुंधरा निराबाधं मुमोचाशु कदुष्णकम् ।
वाष्पं स्त्रीणां स्वभावो हि सुखे दुःखेऽपि रोदनम्॥५९॥
जज्ञिरे जातमात्रे हि लघवस्तरवो जले ।
उत्पादो वा विनाशो वा क्षुद्राणां प्रथमोऽथवा ॥ ६० ॥
सस्यसंछन्नसर्वाङ्गा हरिद्वर्णा वसुंधरा ।
दिद्युते पल्लवाढ्यश्याङ्ग्यष्टिर्लतिका यथा ॥ ६१ ॥
नानावर्णैः सकुसुमैः सस्यैः सर्वसहा बभौ ।
चित्रांशुकपरीधाना धत्ते किमपि गौरवम् ॥ ६२ ॥
कर्षकास्तु वपन्ति स्म धान्यं नानाविधं क्षितौ ।
सहस्रगुणिते लाभे विद्वान्को वा प्रमाद्यति ॥ ६३ ॥
मेघाविर्भावतो धात्री दध्रे कमपि सम्मदम् ।
विदेशादागते पत्यौ यथा प्रोषितभर्तृका ॥ ६४ ॥
वणिजोऽपि निजं कालं श्रीमोहनमुनीशितुः ।
उपदेशाच्छुभं कर्म्म कुर्वन्तो गमयन्त्यथ ॥ ६५ ॥
नानाभिग्रहतो धन्या मुनयो रक्षितव्रताः ।
विचरन्ति चतुर्मासी साध्वसाधुविवेचिनी ॥ ६६ ॥

मेघगम्भीरया वाचा मेघैरिव मुनीश्वरः ।
देशनावारिभिर्नित्यं श्राद्धानुपकरोत्यहो ॥ ६७ ॥
एकस्मिन्नुत्सवे प्राप्ते समाप्तिं तद्दिने ततः ।
आरभ्यते विशेषो नो दिनमप्युत्सवं विना ॥ ६८ ॥
तपस्या यादृशी तस्मिन्वर्षेऽभूद्विपुला नहि ।
तादृशी भाविनी प्रायो मुनिराजान्तरागमे ॥ ६९ ॥
दानमानादिकं कृत्यं समवसरणादिकम् ।
दृश्यं लोकोत्तरं दृष्टं शासनोन्नतिकारकम् ॥ ७० ॥
श्रुत्वोत्साहं श्रावकानां रचनायाः प्रशंसनम् ।
बाहीकैर्नागरैरन्यैः पूरितं सूर्यपत्तनम् ॥ ७१ ॥
आष्टाहिकोत्सवं कर्त्तुमिच्छन्तोऽपि महाजनाः ।
केचित्समयसंकोचान्नो चक्रुर्हतमानसाः ॥ ७२ ॥
आश्विने सम्मदोत्कर्षा उपधानादिकाः क्रियाः ।
यथाशास्त्रं यथाचारं धर्म्मार्थिभिरनुष्ठिताः ॥ ७३ ॥
समाप्तायां क्रियायां हि श्रीमद्भिः श्रावकोत्तमैः ।
सोत्सवं सत्कृताः सर्वे मालिकाभिस्तपस्विनः ॥ ७४ ॥
एवंविधाः क्रिया बह्व्यः संजाताः श्रवणोत्सवाः ।
जीर्णोद्धारस्तथा नव्यमन्दिरादि विशेषतः ॥ ७५ ॥
संवेगरसनिष्णातः श्रीमोहनमुनीश्वरः ।
देशनां मधुरैः शब्दैः सिद्धान्तार्थैश्चकार ह ॥ ७६ ॥

चतस्रो गतयः सन्ति नृतिर्यग्देवदानवाः ।
मानुषी चोत्तमा तासु धर्मोत्पादनहेतुतः ॥ ७७ ॥
धर्म्मसंपादनं श्राद्धा येन चेन्नो विधीयते ।
तेन मूर्खशिरोरत्नप्रथमेनाद्यतेऽङ्कुरः ॥ ७८ ॥
मानुष्ये हारिते श्राद्धा न पुनर्लभ्यते सुखम् ।
तीरान्मध्यगतो जन्तुर्न शीघ्रं तीरगो भवेत् ॥ ७९ ॥
देवत्वमपि निन्दन्ति मानवत्वाद्विवेकिनः ।
निर्वाणे बहिरङ्गा यत्त्रयो मानवमन्तरा ॥ ८० ॥
श्रुत्वा श्रुतविदो वाक्यं श्रीमोहनमुनीशितुः ।
पानाचन्द्रसुता बुद्धा मणिर्मणिसमाशया ॥ ८१ ॥
ललौ दीक्षां महोत्साहपूर्वकं कर्मदारिणीम् ।
अबलाया अपि बलं दृष्ट्वा को न विमुह्यति ॥ ८२ ॥
महत्तरायाः सूरश्रीनाम्न्या हस्ताद्बभूवह ।
दीक्षेयं च विनेयाभूज्जयाया निजभावतः ॥ ८३ ॥
स्वान्ते फकीरचन्द्रस्य हेमचन्द्राङ्गजन्मनः ।
उपदेशो मुनेरासी—च्छुक्तौ स्वातीघनो यथा ॥ ८४ ॥
अयं लक्षपतिर्धीरो लक्षं कक्षमिवात्यजत् ।
अगृह्णाद्भावतो दीक्षां मोहनाह्वमहामुनेः ॥ ८५ ॥
दीनदानमहोत्साहवरघोटकपूर्वकम् ।
रसबाणाङ्कभूमाने वत्सरे फाल्गुने सिते ॥ ८६ ॥

पञ्चम्यां सद्ग्रहे लग्ने शुभवारे यथाविधि ।
दीक्षेयमुत्तमा संघ-समक्षं प्रबभूवह ॥ ८७ ॥
अस्मिन्दीक्षोत्सवे यादृक् संघेनोत्साह आहितः ।
तादृग् नान्यत्र यद्वा श्रीमतां दीक्षा विशिष्यते॥८८॥
जलमध्यास्थितं चापि जलैर्नो लिप्यते यथा ।
पद्मं तथा फकीरोऽपि न लिप्तो वनितादिभिः ॥ ८९ ॥
सादृश्यहेतुकं नाम धृतं पद्ममुष्य च ।
मुनिशब्दान्वितं विश्वैर्मुनेर्मुनिभिरुत्तमैः ॥ ९० ॥
श्रीमोहनमुनीन्द्राणां शिष्येषु तपसा नयैः ।
अग्रिमस्य मुनिर्हर्षमुनेः शिष्योऽसकावभूत् ॥ ९१ ॥
श्रीमोहनमुनिस्तस्माद् विहर्तुं यावदैहत ।
तावत्संघः समागम्य विनिनाय महाग्रहात् ॥ ९२ ॥
मुनिराजोऽपि संघस्य दृष्ट्वा भावं सहेतुकम् ।
क्षेत्रस्य विस्तृतिं चैव तत्रास्थाद्धधर्म्मतत्त्ववित् ॥९३॥
अथ हर्षमुनिर्धीमान्पप्रच्छ मोहनं गुरुम् ।
आज्ञा चेद्गन्तुमिच्छामि तीर्थाटनकृते गुरो ॥ ९४ ॥
सुखं व्रज व्रतिन्वत्स कृत्वा श्रीदेवदर्शनम् ।
पुनरत्र त्वमागच्छेर्मोहनर्षिरवक् त्विदम् ॥ ९५ ॥
हर्षरूपो मुनिर्हर्षः प्राप्याज्ञां मोहनप्रभोः ।
विजहार ततो यद्वा मुनयो विहृतिप्रियाः ॥ ९६ ॥

क्रमयोगेन हर्षोऽगाद्भृगुकच्छाख्यपत्तनम् ।
तत्रत्यैः श्रावकैः सर्वैः सत्कृतो बहुमानतः ॥ ९७ ॥
ततो विहृत्य क्रमतोऽगात्खम्बातपुरं प्रति ।
तत्रापि श्रावकैः सभ्यैर्गृहीतो मानपूर्वकम् ॥ ९८ ॥
ततो विहृत्य मुनिराट् प्राप राजपुरं पुरम् ।
तत्रस्थाः श्रावका इभ्या इमं सम्यगपूजयन् ॥ ९९ ॥
ततो विहृत्य क्रमतः प्राप पट्टणपत्तनम् ।
सहर्षं श्रावकास्तत्र चक्रुरागमनोत्सवम् ॥ १०० ॥
एवंविधान्बहून्ग्रामान्विहृत्य मुनिपुङ्गवः ।
शनैः शनैः समायातः श्रीपालनपुरं पुरम् ॥ १०१ ॥
तत्र हर्षमुनिर्भक्तया तत्रस्थं श्रीयशोमुनिम् ।
ज्येष्ठं ननाम पप्रच्छ सातादि रीतिपूर्वकम् ॥ १०२ ॥
तत्र तत्सङ्गमात्तस्थौ सुखं द्वित्रांश्च वासरान् ।
अवाच्यसुखदो लोके धर्मस्नेहोऽपि कोऽप्यहो ॥१०३॥
ततस्तदाज्ञया हर्षः सहर्षो विजहार ह ।
पावयन्भावनाभिः स्वमाजगामार्बुदाचलम् ॥ १०४ ॥
तत्र तीर्थकृतां बिम्बं दृष्ट्वा संस्मार तद्गुणान् ।
भावितात्मधिया धीमाञ्चकार शुद्धमान्तरम् ॥ १०५ ॥
ततो विहृत्य श्रीहर्षमुनिः शीरोहिपत्तनम् ।
जगाम यत्र श्राद्धानां गृहपञ्चशती शुभा ॥ १०६ ॥

तद्वासिश्रावकैः श्रीमान्सत्कृतस्तान्दिदेश ह ।
यथाशक्ति यथाकालं धर्मे रुचिकरः कृती ॥ १०७ ॥
ततो बमनवाडं द्राग् जगाम मुनिपुङ्गवः ।
श्रीमान्हर्षमुनिर्हर्षात्किं दूरं हर्षशालिनाम् ॥ १०८ ॥
अत्रैव श्रीमहावीरं ददंश सर्पपुङ्गवः ।
कर्णे च कीलकं तस्य दत्तं केनचिदीर्यते ॥ १०९ ॥
तत्रत्यैः श्रावकैः सार्द्धं हर्षो यात्रां यथाविधि ।
चकार त्वरितं तस्माद्विजहार महामनाः ॥ ११० ॥
नांदियावासिनो हर्षः पुपाव निजदर्शनात् ।
आत्मानं च निजं श्रीमान् जिनबिम्बप्रदर्शनात् ॥ १११ ॥
ततो विहृत्य लोटाणा-माजगाम ददर्श च ।
जिनांस्ततो विहृत्यासौ दीयाणां प्राप दर्शनात् ॥ ११२ ॥
एवंविधेषु बहुषु स्थलेषु दर्शनाप्रियः ।
दर्शनं भक्तितः कृत्वा शिरोहीं पुनरागमत् ॥ ११३ ॥
ततो विहृत्य सुखतः श्रीपालनपुरं पुरम् ।
ततो विहृत्य श्रीविंशनगरं नगरोत्तमम् ॥ ११४ ॥
ततो विहृत्य श्रीहर्षः श्रीमद्राजपुरं गतः ।
तत्रत्याः श्रावका भव्याः सोत्साहं तं न्यवीविशन् ॥ ११५ ॥
श्रीमोहनमुनेरग्रशिष्यः श्रीमद्यशोमुनिः ।
श्रीपालनपुरादत्र समागच्छन्महामनाः ॥ ११६ ॥

यशोधवलिताशेषदिशः श्रीमद्यशोमुनिः ।
दयाविमलपन्याससविधं प्राप्य सुन्दरम् ॥ ११७ ॥
श्रीमद्भगवतीसूत्र–योगं सर्वं व्यधाद्द्रुतम् ।
प्राप्ते स्ववसरे नैव प्रमाद्यन्ति सुबुद्धयः ॥ ११८ ॥
सुरगच्छगतो भेदो विमलो नाम यः श्रुतः ।
दयाविमलपन्यासः पारम्पर्ये तदीयके ॥ ११९ ॥
समाप्ते योगजाते श्री–दयाविमलजी सुधीः ।
गणिपन्यासास्पदाभ्यां यशसं समभूषयत् ॥ १२० ॥
अस्मिन्नवसरे श्रेष्ठिमनस्सुखमुखास्तथा ।
सर्वः संघश्चकारातिमहान्तमुत्सवं शुभम् ॥ १२१ ॥
मरुभूमिनिवासी श्रीसंघोऽत्युत्साहपूर्वकम् ।
समायातस्तथा चान्ये गौर्जराः पाट्टणा जनाः॥१२२॥
अतीव शोभनं चासीद्दृश्यं जनसमाकुलम् ।
सर्वैर्जयध्वनिश्चक्रे समुद्दिश्य यशोमुनिम् ॥ १२३ ॥
श्रीयशोमुनिपन्यासः श्रीहर्षमुनिसंयुतः ।
विजहार समाप्तायां क्रियायां वन्दितुं गुरुम् ॥ १२४ ॥
शनैः शनैर्विहृत्येमावायातौ सूर्यपत्तनम् ।
पृष्ठलग्नेव चायाता चतुर्मासी तपःप्रिया ॥ १२५ ॥
वन्दित्वा स्वगुरुं श्रीमन्मोहनर्षिमुभौ सुखम् ।
प्रापतुर्गुरुभक्तिर्हि भवभीतिविनाशिनी ॥ १२६ ॥

अथैतस्यां चतुर्मास्यां तपआदिशुभाः क्रियाः ।
प्रारब्धाः स्वस्वयोग्यं श्री-संघेन सबहूत्सवम् ॥१२७॥
साधुभिश्चैव साध्वीभिः श्रीयशोमुनितः कृताः ।
क्रिया नानाविधा यद्वा सुयोगे कः प्रमाद्यति ॥१२८॥
उदारधीर्यशोराशिरथ श्रीमद्यशोमुनिः ।
यथाचारं यथाम्नायमुपधानाद्यकारयत् ॥ १२९ ॥
श्रीमद्धर्षमुनिर्हर्षाद्यशोमुनिसमागमात् ।
समाप्तवान्क्रियां सर्वां हर्षः सर्वत्र कारणम् ॥ १३० ॥
तपोभिश्चोत्सवैर्दानैः सम्पन्ना सुखतो गता ।
चतुर्मासी नहि प्रायः कालोपाधिः प्रमाद्यति ॥१३१॥
अथ पूर्णक्रियो हर्षमुनिर्नानास्पदैः सुधीः ।
यशोमुन्यादिभिः संघैरलंचक्रे सहोत्सवैः ॥ १३२ ॥
अश्वबाणनिधिक्षोणि (१९५७) मिते संवत्सरे शुभे ।
मार्गशीर्षे कृष्णपक्षे द्वितीयायां शुभे क्षणे ॥ १३३ ॥
श्रेष्ठिनो रायचन्द्रस्य कन्याविद्यालये तदा ।
अदाद्गण्यास्पदं श्रीमद्धर्षाय श्रीयशोमुनिः ॥ १३४ ॥
अस्मिन्नवसरे संघैः कृतमाष्टाहिकोत्सवम् ।
उद्यापनां तथा शान्तिस्नात्रादि विविधोत्सवम्॥१३५॥
पश्यतो जन्तुजातस्य ह्यकस्माद्धर्म्मकर्म्मणि ।
श्रद्धत्ते स्म मनो यद्वाऽतएव दृश्यते शुभम् ॥ १३६ ॥

श्रेष्ठी श्रीधर्म्मचन्द्रोऽदाज्जीर्णोद्धारकृते कृती ।
पञ्चविंशसहस्राणि सर्वसंघसमक्षतः ॥ १३७ ॥
अन्यैरपि यथाशक्ति दत्तं श्रावकसत्तमैः ।
मिलित्वा द्रव्यसंख्याभूत्पञ्चवेदसहस्रकम् ॥ १३८ ॥
एतद्द्रव्यान्मूलभूतात्प्रतिवर्षं लभेत यत् ।
तेनैव जीर्णतीर्थानामुद्धारः संभविष्यति ॥ १३९ ॥
मूलं यथा तथा रक्ष्यमिति सर्वैश्च निश्चितम् ।
लल्लुभाईधर्मचन्द्रादयोऽभूवन्निरीक्षकाः ॥ १४० ॥
एवंविधानि कर्माणि श्रीमोहनमुनीशितुः ।
उपदेशप्रभावेण बभूवुर्भूरिशोऽन्वहम् ॥ १४१ ॥
श्रीमोहनमुनीन्द्रस्य व्याख्यानश्रवणात्तदा ।
लग्नानि धर्म्मकार्येषु मनांसि सर्वप्राणिनाम् ॥ १४२ ॥
कैश्चिन्निष्किञ्चनैर्धर्मकर्म्मसम्भावितात्मभिः ।
यदा द्रव्यागमो भावी प्रथमं मन्दिरादिषु ॥ १४३ ॥
करिष्यामो व्ययं तस्य सम्यक् श्रद्धापुरस्सरम् ।
इति सङ्कल्पनान्मन्ये बहुधर्म्मा उपार्जिताः ॥ १४४ ॥

---

१ रेफकृतसंयोगादिगुरुत्वस्यानित्यत्वाददोषः । प्रशब्दे ह्रशब्दे च परतोऽपादान्तस्थस्यापि लघुताया बहुषु कविप्रयोगेषूपलम्भात् । संयोगमात्रे परभूते तीव्रप्रयत्नतया लघुत्वमित्यपि कैश्चिदभ्युपगतत्वात् । तथा चोक्तं सरस्वतीकण्ठाभरणे—"यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः" अत्रोदाहरणानि प्रमाणान्तराण्तराणि च गौरवभिया न लिखितानीति ।

कैश्चित्कार्यैर्मनोभिश्च कैश्चित्कैश्चिच्च भाषणैः ।
धर्मः सम्पादितो विश्वैः शक्तिरेव बलीयसी॥ १४५ ॥
करणैः कारणैः कैश्चित्कैश्चिच्चैवानुमोदनैः ।
धर्मप्रसंगतो धर्मः कृतः श्रावकपुङ्गवैः ॥ १४६ ॥
श्रीमोहनमुनिर्धर्म्मं व्याख्याति स्म निरन्तरम् ।
यद्वा चन्द्रः सुधां नैव प्रवर्षति यदा कदा ॥ १४७ ॥
अथागतान्मुनिः श्राद्धानुवाच सकलान्प्रति ।
श्राद्धा धर्म्मे रुचिः कार्या सैव कल्पद्रुवल्लरी ॥१४८॥
रुचिः प्रवर्त्तिका धर्मे धर्म्मः सर्वस्य कारणम् ।
ईच्छैव हि प्रवृत्तीनां हेतुर्नात्र विचारणा ॥ १४९ ॥
य इच्छति स यतते व्यतिरेको न दृश्यते ।
रुचिरिच्छैव नान्येति भ्रमितव्यं कदाचन ॥ १५० ॥
रुची रागात्मिका नैव श्रेयसी क्षणिका यतः ।
अभ्यासात्फलविश्वासाज्जायते सा गरीयसी॥ १५१ ॥
अभ्यास एव कल्पद्रुर्बीजरूपोऽखिलस्य तु ।
सत्कार्यस्येति तत्रैव कालक्षेपो विधीयताम्॥ १५२ ॥
आत्माविर्भावने सर्वकारणात्प्रथमोऽयकम् ।
शनैः शनैः स कर्त्तव्यः साहसोत्साहपूर्वकम् ॥ १५३ ॥

१ "जानाति, इच्छति, यतते" इत्यस्य नियमस्य सार्वत्रिकत्वात् । यथा धर्मो मदिष्टसाधनमिति ज्ञाते भवति खलु धर्मे रुचिरिच्छापरपर्याया । जातायां हि तस्यां तत्रावश्यंभाविनी प्रवृत्तिः । प्रवृत्तेरिच्छाजन्यत्वस्य नियतत्वादिति विवेकः ।

शनैः शनैः प्रवृद्धस्य स्थायित्वं भवति ध्रुवम् ।
एरण्डो वर्द्धते शीघ्रं क्षीयते चाल्पकालतः ॥ १५४ ॥
केचिदादौ प्रकुर्वन्ति सन्ति कार्याणि भूरिशः ।
अन्ते तेभ्यो विरज्यन्ते मोहोपहतचेतनाः ॥ १५५ ॥
केचित्प्रवृत्तिकाले तु प्रवर्त्तन्ते शनैः शनैः ।
क्रमशो वर्द्धमानास्ते साधयन्ति सुनिश्चितम् ॥१५६॥
तस्माच्छक्त्यनुसारेण प्रवृत्ती रुचिपूर्विका ।
कर्त्तव्या कामधेनुः सा फलं दत्ते समीहितम्॥ १५७ ॥
अनुद्दिश्य फलं यद्धि क्रियते तत्त्वदर्शिभिः ।
तस्याधिकारिणः प्रायो ज्ञाततत्त्वा भवन्ति हि॥१५८॥
इत्यादिबहुधोपायैः शास्त्रीयैर्बुद्धिसंस्कृतैः ।
श्रीमोहनमुनिः श्राद्धान्प्रबुद्धानिव निर्ममे ॥ १५९ ॥
सत्समाजमुनिराजवन्दितपादपद्मयुगलः स मोहनः ।
श्राद्धसद्धृदयशुक्तिकं व्यधाच्छारदाब्दइव बोधरत्निनम्॥
इति श्रीउत्तरमोहनचरिते पञ्चमः सर्गः॥ ५ ॥

---

## षष्ठः सर्गः ।

वाचस्पत्यादयो देवाः स्वसमीहितसिद्धये ।
यां नमन्ति सदा भक्त्या तां वन्दे हंसवाहिनीम्॥ १ ॥

---

१ 'रथोद्धता' वृत्तम् । लक्षणं तु प्रागभिहितमेव ।

अनात्मन्यात्मधीर्यस्य नैवास्ति तत्त्वदर्शिनः ।
अभ्यासशालिनस्तस्य क्रियाः सर्वा विमुक्तये ॥ २ ॥
अथ श्रीमन्महामोहमोहनो मोहनो मुनिः ।
विजहार समं शिष्यैः श्रीसूर्यपुरपत्तनात् ॥ ३ ॥
श्रीसूर्यपुरवास्तव्याः श्रावका विहृतौ मुनेः ।
विलीनमणयो नागा इवाभूवन्हतप्रभाः ॥ ४ ॥
सर्वैरेकमुखैः प्रोचे श्रीमोहनमुनीश्वरः ।
वृद्धस्य श्रीमतोऽभ्यर्चां कर्त्तुमीहामहे वयम् ॥ ५ ॥
उवाच मोहनर्षिस्ताञ्श्रावकान्खिन्नचेतसः ।
श्राद्धाः सनातनः पन्था मुनीनामेष धार्मिकः ॥ ६ ॥
इतश्च श्रावकैर्देवकर्णाद्यैः शुश्रुवे तदा ।
मुम्बईवासिभिस्तारो विहारो मोहनप्रभोः ॥ ७ ॥
धावन्ति स्माथ ते श्राद्धा निकषा मुनिमोहनम् ।
यद्वास्य मुनिराजस्य रागिणो विश्वजैनिनः[1] ॥ ८ ॥
एत्य ते विनयं चक्रुर्गन्तुं मोहमयीं पुरीम् ।
मुनिराजोऽपि तत्त्वज्ञो मनस्येवमचिन्तयत् ॥ ९ ॥
प्रायः क्षेत्रेषु सर्वेषु प्रचारो दृश्यते बहुः ।
संवेगिनां न कस्यापि मोहमय्यां पुरि प्रधीः ॥ १० ॥

---

१ जिनप्रोक्तो धर्मो जैनः स विद्यते एषु इति जैनिनः । विश्वे च ते जैनिनश्च विश्वजैनिनः इति कर्मधारये कृते सर्वे जैना इति निर्गलितोऽर्थः ।

समुद्रे श्रूयते प्रायो मेघानामपि वर्षणम् ।
मरुस्थल्यां नहि प्रायो रूढिः सर्वत्र विद्यते ॥ ११ ॥
श्रावकास्तत्र भूयांसो मन्दिराणि बहूनि च ।
सन्ति रम्यं तथा क्षेत्रं त्रुटिः संवेगिनः खलु ॥ १२ ॥
गतेऽपि मयि नैवाभूत्प्रचारोऽतः पुनर्मया ।
गन्तव्या सा पुरी येन गच्छेयुश्चान्यसाधवः ॥ १३ ॥
संवेगिनां विहरतां कर्त्तव्या शासनोन्नतिः ।
सा तत्र भाविनी रूढेर्भङ्गश्चापि भवेद्ध्रुवम् ॥ १४ ॥
इत्यादि चिन्तयित्वाथ श्रीमोहनमुनीशिता ।
विजहार समुद्दिश्य श्रीमतीं मुम्बईपुरीम् ॥ १५ ॥
नवसारीबिल्लिमोरादिषु तिष्ठन्यथाक्रमम् ।
साधुभिः श्रावकैः सार्द्धं प्राप्तो मोहमयीं पुरीम् ॥ १६ ॥
पञ्चदश्यां तिथौ पौषशुक्लायां मोहनर्षयः ।
विविशुः श्रीमहात्मानः पुरीं मोहमयीं शुभाम् ॥ १७ ॥
तदानीं मुम्बईवासिभिः प्रवेशोत्सवः कृतः ।
यदद्भुतवर्णनान्मन्ये श्रेयोऽहं तदवर्णनम् ॥ १८ ॥
एकेनाग्रेसरेण श्रीदेवकर्णेन धीमता ।
भक्त्युत्साहवता मार्गप्रभावनोत्सवादिषु ॥ १९ ॥
धनानि व्ययितान्येव तस्मिन्नवसरे शुभे ।
धर्म्ममुद्दिश्य तत्संख्या द्विसहस्रं चतुःशतम् ॥ २० ॥

अन्यैश्च श्रावकैस्तस्मिन्दिने द्रव्याणि भूरिशः ।
व्ययितानीत्यनेनैव प्रवेशः सोऽनुमीयताम् ॥ २१ ॥
अथ सर्वस्य संघस्य देवकर्णस्य चाग्रहात् ।
मुनिराजैर्महाभागैर्लालबागमलंकृतम् ॥ २२ ॥
आगतिर्मुनिराजस्य मोहनर्षेर्मनीषिणः ।
मोहमय्यां हि संघस्य संजाता कल्पवल्लरी ॥ २३ ॥
देवकर्णं विशेषेण श्रीसंघः प्रशशंस ह ।
यद्विशेषाग्रहादेवाययौ मोहमयीं मुनिः ॥ २४ ॥
मुक्तिचन्द्रात्मजं क्षेमचन्द्रं चाभिननन्द सः ।
यद्गृहं मुनिराजोऽसौ मुक्तिक्षेत्रमिवाकरोत् ॥ २५ ॥
मुनिराजोऽपि सर्वांस्ताञ्श्रावकान्भक्तिशालिनः ।
ज्ञानाङ्कुराश्रयांश्चक्रे देशनाजलवर्षणैः ॥ २६ ॥
एतस्मिन्नन्तरे पूर्णचन्द्रस्य तनयः पटुः ।
पन्नालालोऽर्थयाञ्चक्रे गन्तुं तं वालुकेश्वरम् ॥ २७ ॥
नवभिः साधुभिः सार्द्धं मोहनर्षिर्विशुद्धधीः ।
अलञ्चकार मोहध्रुट् पन्नालालस्य वाटिकाम् ॥ २८ ॥
व्याख्याति स्म तथा धर्मं यथा बुद्ध्वा तदैव हि ।
महामनाः श्रीकमलो ललौ दीक्षां सुभावतः ॥ २९ ॥
दीक्षां दत्वा महाराज उक्तवान्भो मुने शृणु ।
संसारे सलिलाकारे निर्लेपः पद्मवद्भव ॥ ३० ॥

तस्मिन्सुदिवसे पन्नालालः श्रेष्ठिशिरोमणिः ।
मुन्यागमनमुद्दिश्य चकारानल्पमुत्सवम् ॥ ३१ ॥
नगरान्नगरं याति मुनिराजे यथोत्सवः ।
क्रियते तत्समश्चक्रे पन्नालालेन चोत्सवः ॥ ३२ ॥
कतिचिद्दिवसांस्तत्र स्थित्वा श्रीमोहनो मुनिः ।
पुनरागात्समं शिष्यैर्लालबागं सहोत्सवम् ॥ ३३ ॥
इतो हर्षप्रभृतिभिश्चतुर्भिः साधुभिः सह ।
दशम्यां माघशुक्लायां श्रीसूर्यपुरपत्तनात् ॥ ३४ ॥
विजहार यशोभूमिस्तपस्वी श्रीयशोमुनिः ।
प्राप मोहमयीं चैत्रशुक्ले गौरीतिथावयम् ॥ ३५ ॥
प्रविशत्स्वेषु मुम्बायां देवकर्णेन श्रेष्ठिना ।
स्वकीयेन व्ययेनैव चक्रे सामयिकोत्सवः ॥ ३६ ॥
प्रभावनादिकृत्येषु मुनीनुद्दिश्य योऽध्वनि ।
व्ययोऽभूत्सर्वएव श्री-देवकर्णस्य सोऽभवत् ॥ ३७ ॥
चैत्रान्तं लालबागेऽभूद्व्ययो यः सर्व एव सः ।
प्रभावनादिकृत्येषु देवकर्णस्य भाविनः ॥ ३८ ॥
एकदा श्रावकैः सर्वैः सम्भूतैर्मुनियोगतः ।
उद्दिश्य धर्ममिच्छद्भिर्व्ययं कर्तुं सुधीधनैः ॥ ३९ ॥
एकस्य देवकर्णस्य व्ययो नैवात्र शोभते ।
सर्वस्य मुनिराजोऽयमथ स्मैवं विचिन्त्यते ॥ ४० ॥

किञ्चास्मिन्समयेऽलभ्ये धर्म्मकृत्ये प्रियंवदाः ।
धनं न त्यज्यतेऽस्माभिर्भाग्यहीना वयं ध्रुवम् ॥ ४१ ॥
यैरेव धनिभिर्धर्म्मे धनं निक्षिप्यतेऽन्वहम् ।
त एव धनिनो धन्याः पण्डिताः प्रियदर्शनाः ॥ ४२ ॥
शुभकृत्येषु निक्षिप्तं धनं जन्मान्तरे सता ।
लभ्यते नात्र सन्देहो भूत्वाऽनन्तगुणं खलु ॥ ४३ ॥
धनं स्वर्गापवर्गस्य हेतुर्नैवात्र संशयः ।
पात्रदानादयो यस्माद्धनसाध्याः शुभाः क्रियाः ॥ ४४ ॥
यैश्च नोपार्ज्यते धर्म्मो धनेन धनिभिर्भृशम् ।
तैर्भ्रान्तैः पण्डितम्मन्यैर्हहा दारिद्र्यमर्ज्यते ॥ ४५ ॥
कश्चिन्मूर्खशिरोरत्नं जानाति व्ययतो धनम् ।
न्यूनं भविष्यतीत्यस्माद्व्ययते न वराटिकाम् ॥ ४६ ॥
दरिद्रतभवद्दुःखं भुक्त्वा मृत्वा स तद्धनम् ।
सर्पो भूत्वा रक्षतीति हहाऽज्ञानविजृम्भितम् ॥ ४७ ॥
कश्चिद्व्ययति पापेषु नारकं दुःखमर्जति ।
तस्य हा हतभाग्यस्य धनं पालितसर्पवत् ॥ ४८ ॥
इत्यादि चिन्तयित्वा तैः श्रावकैः शुभचिन्तनैः ।
सम्भूय व्ययितव्यं चास्माभिरेवं विनिश्चितम् ॥ ४९ ॥
पूर्णचन्द्रात्मजेन श्रीपन्नालालेन धीमता ।
दत्ता पञ्चशती हर्षाद्धर्षो दाने प्रशस्यते ॥ ५० ॥

दत्तं नगीनदासेन कर्पूरतनुजन्मना ।
शतद्वयं रूप्यकाणां मुदा पञ्चाशदुत्तरम् ॥ ५१ ॥
उदयश्रेष्ठिपुत्रेण धर्मचन्द्रेण दानिना ।
शतद्वयं रूप्यकाणां दत्तं पञ्चाशदुत्तरम् ॥ ५२ ॥
भक्तेन देवकर्णेन मूलजीतनुजन्मना ।
शतद्वयं रूप्यकाणां दत्तं पञ्चाशदुत्तरम् ॥ ५३ ॥
एवं कैश्चिच्छतं कैश्चित्पञ्चाशत्पञ्चविंशतिः ।
सर्वसङ्कलने द्रव्यमभूदष्टसहस्रकम् ॥ ५४ ॥
पर्याप्तं लालबागस्य वर्षमात्रकृते व्यये ।
भवितेति स्फुटं ध्यात्वा श्रेष्ठिभिः स्म विरम्यते ॥ ५५ ॥
अथ हर्षगणेरद्य पूर्णयोगस्य योगिनः ।
पन्यासपदवी देयेत्येवं सर्वैर्विनिश्चितम् ॥ ५६ ॥
श्रीमद्धर्षमुनिर्योगी यादृशोऽस्ति महातपाः ।
तथा महोत्सवः कार्य एवं सर्वैर्विनिश्चितम् ॥ ५७ ॥
निश्चित्य ते तथा कर्त्तुं लग्नाः श्रावकपुङ्गवाः ।
निश्चिते न विलम्बन्ते सुधियो नयदर्शनाः ॥ ५८ ॥
लेखैर्वाग्भिश्च श्रीमद्भिः श्रावकैर्भक्तिशालिभिः ।
तस्मिन्क्षेत्रे परक्षेत्रे प्रसिद्धिरिति कारिता ॥ ५९ ॥
आषाढशुक्लषष्ठ्यां श्रीमोहनर्षेर्महामुनेः ।
शिष्याय स्वसदाचारनिष्ठाय विदुषे तथा ॥ ६० ॥

शान्तात्मने सदादान्तहृषीकाय महात्मने ।
तपस्विने श्रीहर्षाय पन्यासपदवी शुभा ॥ ६१ ॥
दातव्या तत्प्रसङ्गेन भविता चोत्सवो महान् ।
आगन्तव्यं हि संघेन शासनोन्नतिकाङ्क्षिणा ॥ ६२ ॥
सिद्धाचलादिसप्तानां तीर्थानां दृश्यमुत्तमम् ।
तदा दृष्टिपथं याता दुरितध्वंसकारणम् ॥ ६३ ॥
ईदृग्दृश्यं पुनर्नैव कालेऽस्मिन्नातिदारुणे ।
दारिद्र्यप्रचुरे भव्या भविष्यत्यनुमीयते ॥ ६४ ॥
रचना समवसरणस्यात्यन्ताह्लादकारिणी ।
भाविनी नैव हातव्यः कालोऽयं भव्यसत्तमाः ॥ ६५ ॥
कस्तूरचन्द्रतनयामीचन्द्रस्वर्गवासिनः ।
पत्नी गुलाबनाम्नी या धर्म्मकार्यधुरंधरा ॥ ६६ ॥
तया तथैव श्राद्धस्य चुन्नीलालस्य रत्निनः ।
कङ्कूनाम्न्या धर्म्मपत्न्या तथान्यैः श्राविकाजनैः॥६७॥
करिष्यते समारोहपूर्वकं समहोत्सवम् ।
दुरदृष्टगणध्वंसी श्रीमदुद्यापनोत्सवः ॥ ६८ ॥
भव्या भवद्भिर्नो कार्यः प्रमादोऽस्मिञ्शुभे दिने ।
आयुर्भवन्तो जानन्ति पताकाञ्चलचञ्चलम् ॥ ६९ ॥
आरभ्य ज्येष्ठकृष्णस्य सर्वसिद्धां त्रयोदशीम् ।
आषाढशुक्लपक्षीयचतुर्दश्यवधि ध्रुवम् ॥ ७० ॥

भावी महोत्सवः श्रीमत्तीर्थनाथस्य सन्निधौ ।
भव्या नित्यं भयत्राता दाता शिवसुखश्रियः ॥ ७१ ॥
ज्येष्ठकृष्णत्रयोदश्यां शुभायां शुभखेचरे ।
समये भाविनी कुम्भस्थापना शुभदर्शना ॥ ७२ ॥
आषाढे शीतकिरणोन्नतिहेतौ दले खलु ।
प्रतिपद्यतिशायी भव्या निर्गन्ता वरघोटकः ॥ ७३ ॥
इत्यादिभाविनोऽनेके कर्त्तव्याः शुभहेतवः ।
एषां लाभः श्राद्धवर्यैर्भवद्भिर्गृह्यतामिति ॥ ७४ ॥
श्रुत्वेति श्रावका लग्ना विषयान्तरवासिनः ।
आगन्तुमभवन्मोहमयी श्राद्धमयीव यत् ॥ ७५ ॥
श्राद्धवृन्दं समायातं कदम्बककदम्बकम् ।
देशान्तरान्मुमुदिरे श्राद्धा मुम्बानिवासिनः ॥ ७६ ॥
यथासमयमारब्धो माधवोद्यानमानि ।
यथाचारं यथातन्त्रं श्रावकैः स क्रियागणः ॥ ७७ ॥
आयातानां श्रावकाणां तथा नगरवासिनाम् ।
बादित्राणां तथा तीर्थरचनानां बहुत्वतः ॥ ७८ ॥
उत्सवोऽयं लालबागे महत्यपि च नो ममौ ।
ततोऽभवन्महोद्याने माधवीये महोत्तमे ॥ ७९ ॥
ज्येष्ठकृष्णत्रयोदश्यां घटस्थापनके दिने ।
कृतं श्रीस्वामिवात्सल्यं देवकर्णसमष्टितः ॥ ८० ॥

देवकर्णः कलौ कर्ण इति वाग् नातिशायिनी ।
अग्रेसरोऽयं सर्वेषु यतः कर्म्मसु दृश्यते ॥ ८१ ॥
आषाढे धवले पक्षे प्रथमायां तिथौ यदा ।
वरघोटकमुद्दिश्य प्रचेलुः श्रेष्ठिसम्भवाः॥ ८२ ॥
सर्वाङ्गसुन्दरा बाला मदनोन्मानमाथिनः ।
अनुमानपथाक्रान्तरत्नालङ्कारसंस्कृताः ॥ ८३ ॥
चतुरश्वरथारूढाः परितः पत्तिभिर्वृताः ।
वादित्रमधुरारावैराह्वयन्तो निरीक्षकान् ॥ ८४ ॥
निर्निमेषांश्च[1] कुर्वन्तो सनिमेषानपि क्षणम् ।
सहजानन्ददैर्बालत्वैश्चमत्कारकारणैः ॥ ८५ ॥
तदाऽभूद्द्रष्टृलोकानां सन्निपातोऽतिसंकुलः ।
संयोगोऽपि सुदूराणां समवाय इवाभवत् ॥ ८६ ॥
व्याजहे सज्जनैर्देशहितायार्पितजीवनैः ।
मुण्डितो भारतश्चेद्दागितः पूर्वस्य का कथा ॥ ८७ ॥
धन्यवादास्तदा दत्ता रत्नभ्यः प्रेक्षकैर्जनैः ।
सत्यापयन्ति यच्चेम इतिहासान्पुरातनान् ॥ ८८ ॥
षष्ठ्यां श्रीहर्षमुनिराट् शान्तो दान्तो वशी कृती ।
संन्यासकौशलद्योतितपन्यासास्पदसंस्कृतः ॥ ८९ ॥

---

१ अस्ति खल्वत्र विरोधाभासो नामालंकारः । तल्लक्षणं तु " आभासत्वे विरोधस्य विरोधाभास इष्यते " इति । तस्यात्र समन्वयो यथा--सनिमेषा मानवा निर्निमेषा देवा भवितुमशक्या इति विरोधः । प्रेक्षणीयस्यातिसुन्दरत्वादासक्त्या निर्निमेषं निरीक्षणं संभवतीति विरोधपरिहारः । तथा च बाढं निष्पन्नो विरोधाभासालंकारः

तस्मिन्नवसरे संघ उद्दिश्येमं महामुनिम् ।
चक्रे जयध्वनिं येन जयाद्वैत इवाभवत् ॥ ९० ॥
यादवात्मजनिः श्रीमानमीलालः प्रभावनाम् ।
चकार मङ्गलैः पूर्णैर्नारिकेलफलैर्मुदा ॥ ९१ ॥
द्रव्यं तस्मिन्दिने मोहमयीसंघः प्रसङ्गतः ।
निराश्रिताश्रयायादादष्टादशसहस्रकम् ॥ ९२ ॥
तस्मिन्नेव दिने पूर्णचन्द्रजः श्रेष्ठिसत्तमः ।
पन्नालालोऽकरोत्स्नात्र-मष्टोत्तरशताभिधम् ॥ ९३ ॥
अनेन श्रेष्ठिवर्येण तस्मिन्नेव दिने शुभे ।
कृतं श्रीस्वामिवात्सल्यं येन धर्मोऽनुरज्यते ॥ ९४ ॥
आषाढशुक्लपक्षीयत्रयोदश्यां फतात्मजः ।
माषाजीत्यभिधेयो यो मरुदेशविभूषणः ॥ ९५ ॥
धराधारां शान्तिधारां स चकार यथाविधि ।
तस्मिन्नेव दिने स्वामिवात्सल्यं चातिहर्षतः ॥ ९६ ॥
षष्ठ्यामाषाढकृष्णायां खडकप्रान्तवासिभिः ।
कृतं श्रीस्वामिवात्सल्यं मरुदेशनिवासिभिः ॥ ९७ ॥
आषाढस्यासिते पक्षे त्रयोदश्यां तथापरैः ।
कृतं श्रीस्वामिवात्सल्यं मरुस्थलविभूषणैः ॥ ९८ ॥
एवमादि शुभं कृत्यं तपस्या चापि भूयसी ।
बहवोऽस्यां चतुर्मास्यामाष्टाहिकमहोत्सवाः ॥ ९९ ॥

खुशालचन्द्रसंभूतीरायचन्द्रो वणिग्वरः ।
चकाराष्टाहिकं भक्त्या चोत्सवं समहोत्सवम्॥ १०० ॥
भाद्रकृष्णत्रयोदश्यां रायचन्द्रेण रत्निना ।
कृतं श्रीस्वामिवात्सल्यमनेन भवभीरुणा ॥ १०१ ॥
मूलचन्द्रजनुः श्रीमानुत्तमः पुरुषोत्तमः ।
भक्त्या सस्वामिवात्सल्यं चकाराष्टाहिकोत्सवम्॥१०२॥
एतस्यां हि चतुर्मास्यां न कोऽपि दिवसो विना ।
व्यतीयायोत्सवं यद्वा सकालं चोत्सवद्वयम् ॥ १०३ ॥
उपदेशान्मुनेः सर्वे धनानित्यत्वमाविदन् ।
धनं धर्माय भोगाय नाऽधर्मायेक्षणाय च ॥ १०४ ॥
अद्यापि स्मर्यते लोकैस्तद्वर्षीयं मनोहरम् ।
वात्सल्यं चोत्सवाधिक्यं तपोभूयस्त्वमेव च ॥ १०५॥
समाप्तितोऽभवन्मास आश्विने वालुकेश्वरे ।
उपधानं वाटिकायां पन्नालालस्य जैनिनः॥ १०६ ॥
मार्गशीर्षे शुभे पक्षे षष्ठ्यां तेऽथ तपस्विनः ।
पूजिता मालिकाजालैर्यमद्भुतभयावहैः ॥ १०७ ॥
तदुद्दिश्यैव संघेन कृतश्चाष्टाहिकोत्सवः ।
निष्कासितोऽतिलोक्यश्रीः पूर्ववद्वरघोटकः॥ १०८ ॥
अस्मिन्नपि दिने भव्यभवभुग् दर्शनाच्छुभात् ।
कृतं समवसरणं दृष्टिमोहहरं ध्रुवम् ॥ १०९ ॥

देशनान्मुनिराजस्य मोहनर्षेर्मुनीशितुः ।
दृश्येक्षणाच्चोत्सवाच्चाभवदानन्द उत्कटः ॥ ११० ॥
विहर्त्तुकामो मुनिराट् श्रावकाणां महाग्रहात् ।
महत्तमत्वात्क्षेत्रस्याथास्थात्तत्रैव मोहनः ॥ १११ ॥
नवबाणाङ्कभूवर्षे मार्गशीर्षे यथाक्रमम् ।
शिष्यान्विहर्त्तुमादिक्षत्तत्रस्थान्मुनिसत्तमः ॥ ११२ ॥
आगन्तुमुत्सुकांस्तत्र विषयान्तरवासिनः ।
आज्ञापयदथागन्तुं विहारो मुनिभूषणम् ॥ ११३ ॥
हर्षस्तु नात्यजत्सेवाचुञ्चुस्तच्चरणाम्बुजम् ।
षट्पदाः किमु गच्छन्ति हित्वा पङ्कजपल्लवम् ॥ ११४ ॥
अयं महात्मनः स्वस्य मोहनर्षेर्गुरोः पदम् ।
सेवमानो निजात्मानं कृतकृत्यममन्यत ॥ ११५ ॥
शैक्ष्याश्चाभिनवा ये तु तेऽप्यासन्मोहनप्रभोः ।
सविधे गुरुसान्निध्यं स्वीयरीतेर्हि शिक्षकम् ॥ ११६ ॥
श्रीहर्षमुनिशिष्यस्य रङ्गनाम्नो मुनेरभूत् ।
छेदोपस्थापनं साङ्गं महाव्रतसमर्प्पणम् ॥ ११७ ॥
तद्दिनेऽनेनैव सार्द्धं श्रीयशोमुनिशैक्ष्यकः ।
भक्त्या भक्तिमुनिर्भारमुवाह भवभेदनम् ॥ ११८ ॥
चतुरस्य मुनेश्चापि विनेयस्य महामुनेः ।
श्रीमद्धर्षमुनेश्चाभूच्छेदोपस्थापनं शुभम् ॥ ११९ ॥

श्रीरत्नलब्धिचमना मुनयोऽमी महाव्रताः ।
विनेया मुनिराजस्य श्रीमद्राजमुनेस्त्रयः ॥ १२० ॥
मार्गशीर्षे शुभे पक्षे द्वितीयायां शुभे क्षणे ।
पोरबन्दरवास्तव्यो भगवानिति संज्ञया ॥ १२१ ॥
जात्या दशश्रीमालीयो ज्ञात्वा भवभयं महत् ।
त्यक्तर्द्धिरङ्गीचक्रेऽसौ दीक्षां भवभयापहाम् ॥ १२२ ॥
मोटाजीदेहजातस्य वरधाज्याह्वयस्य हि ।
गृहाद्विनिर्गतश्चासीद्भूरिश्रीर्वरघोटकः ॥ १२३ ॥
मुनित्वे मुनिराजस्यास्याभूद्भक्तीतिसंज्ञकम् ।
नाम भक्तिमतः शोभाधाम शर्म्मकरं वरम् ॥ १२४ ॥
मोहनर्षेः प्रशिष्यस्य कल्याणस्य मुनेरयम् ।
विनेयः सनयो भक्त्या बभूव भवभीरुकः ॥ १२५ ॥
मुम्बईतिलके वालुकेश्वरे निजकानने ।
पन्नालालात्मजः श्रीमानमीचन्द्रो जिनालयम् ॥ १२६ ॥
चकार कृतवांस्तत्र प्रतिष्ठां मुनिपुङ्गवः ।
मोहनर्षिर्मार्गशीर्षे शुक्लायां पञ्चमीतिथौ ॥ १२७ ॥
कालविन्मुनिराजोऽयममीचन्द्रं शशास ह ।
जिनालयव्ययार्थं त्वं द्रव्यं देहि महामते ॥ १२८ ॥
पश्चात्प्रमादवशतो भविताऽसातनान्यथा ।
सर्वेषां चैत्यकर्तॄणामेष पन्थाः प्रदर्श्यते ॥ १२९ ॥

अमीचन्द्रोऽपि सुप्रज्ञ ओमित्युक्त्वाथ तत्क्षणम् ।
चैत्यकार्यकृते प्रादात्सहस्रं पञ्चविंशतिम् ॥ १३० ॥
अदःप्रसङ्गतोऽकार्षीदुत्सवं समहोत्सवम् ।
कर्माष्टकष्टदलनचणं घस्रैरथाष्टभिः ॥ १३१
सर्वासातोपशमनं दात्रं दुष्कर्म्मसंततेः ।
चकार शान्तिस्नात्रं च अमीचन्द्रो महामतिः॥१३२॥
ससन्मानं प्रशंसैकपात्रं प्रज्ञाविशारदः ।
अमीचन्द्रश्चकाराथ स्वामिवात्सल्यमुत्तमम् ॥ १३३ ॥
माघेऽथाघद्विपव्याघ्रे नूनमेकादशीतिथौ ।
कृष्णपक्षे चतुर्णां हि छेदोपस्थापनक्रिया ॥ १३४ ॥
अभूत्तेषामिदं नाम यतीनां संयतात्मनाम् ।
संवेगरससुस्वादलोलुपानां वशात्मनाम् ॥ १३५ ॥
गतमानस्य शिष्यः श्रीगुमानस्य क्षमावतः ।
अन्वर्थनामा विज्ञेयस्तीक्ष्णप्रज्ञः क्षमामुनिः॥ १३६ ॥
अनेन मुनिना पूर्वं गार्हस्थ्यमधिकुर्वता ।
अलंकृतो हथोडाख्यो ग्रामः सुरतमध्यगः ॥ १३७ ॥
जनकोऽस्य महाभाग्यः श्रीमोहनवणिग्वरः।
जननी देवपूर्वा श्रीकुमारी पञ्चपुत्रिका ॥ १३८ ॥
श्रीमद्देवमुनेः शिष्यो लेच्छग्रामविभूषणम् ।
सद्भावभावितात्मा श्रीभावाख्यो मुनिसंयुतः॥ १३९॥

उक्तस्यैव मुनेः शिष्यः कर्पूर इव निर्मलः ।
मुनिः कर्पूरनामा यो मरुभूमिभयापहः ॥ १४० ॥
कल्याणपादपद्मभ्रमरायितशिरोलकः ।
नाम्ना भक्तिमुनिश्चेमे चत्वारः परिकीर्त्तिताः ॥ १४१॥
अस्मिन्नेव दिने श्राद्धः शुद्धसत्त्वोऽल्पकर्मकः ।
पालनादिपुरप्रान्तपुरवासी वशी कृती ॥ १४२ ॥
ओशवालाख्यजातीयो नाम्ना माणिक्यचन्द्रकः ।
भावतो द्रव्यतश्चापि दीक्षां जग्राह सद्ग्रहः ॥ १४३ ॥
अयं श्रीमन्मुनीन्द्रस्य हर्षस्य यमिनो मुदा ।
विनेयो व्यत्ययो नाम्नि विशेषो नास्य दृश्यते ॥ १४४ ॥
वध्वा श्रेष्ठिभगवतो पोरबन्दरवासिनः ।
अस्मिन्नेव दिने दीक्षा जगृहे पुरपट्टणे ॥ १४५ ॥
इयं हीरश्रियः शिष्याऽभवद्भवभयाकुला ।
विवेकश्रीरिति ख्याता सद्विवेकप्ररोचिनी ॥ १४६ ॥
अथ फाल्गुनशुक्लायां पञ्चम्यां सद्ग्रहे क्षणे ।
अभयाङ्गजमाणिक्यचन्द्रश्रेष्ठिप्रिया सती ॥ १४७ ॥
प्रश्नानाम्नी शुभां दीक्षां जग्राह भवनाशिनीम् ।
हीरश्रियो विनेयंये प्रश्नश्रीनामिकाऽभवद् ॥ १४८ ॥
अस्मिन्नेव दिने काचित्पोरबन्दरवासिनी ।
जग्राह दीक्षां रूपश्रीर्विनेयेयं सुराश्रियः ॥ १४९ ॥

अस्याः पुत्रोऽपि जग्राह देवीदासोऽल्पकर्मकः।
दीक्षां फाल्गुनशुक्लायां सप्तम्यां बालकोऽप्यहो॥१५०॥
सद्दर्शनस्य नामास्याभूद्दर्शनमुनिर्मुनेः।
विनेयश्चाभवद्भक्त्या श्रीमद्भक्तिमुनेरयम् ॥ ५१ ॥
अथ श्रीमन्महाराजो मनस्वी मोहनो मुनिः।
लालबागाद्विहृत्यासौ वालुकेश्वरमध्यगात् ॥ ५२ ॥
मुनिर्व्याचक्षमाणोऽयं पन्नालालस्य वाटिकाम्।
बुभूष तत्र चायातो भव्यो भवभयं वहन् ॥ ५३ ॥
पोरबन्दरवास्तव्यो महाभाग्यो मुनिं स्मरन्।
सौभाग्यचन्द्रनामासौ देवीदासस्य मातुलः ॥ ५४ ॥
दृष्ट्वा तं मुनिराजोऽपि भवभीतं भयापहः।
बोधयित्वा दिदीक्षे वा दीक्षैव भयभञ्जिनी ॥ ५५ ॥
वैशाखकृष्णैकादश्यामियं दीक्षा बभूव ह।
शिष्यः पद्ममुनेश्चास्य शुभो नाम शुभप्रदम् ॥ ५६ ॥
श्रीमोहनमुनिः स्थित्वा दिनानि कतिचित्पुनः।
लालबागमलञ्चक्रे रत्नत्रयविभूषणः ॥ ५७ ॥
इतोऽपि मुनिराजोऽयं विजहार महामनाः।
पुपाव दादरादींश्च विहारैर्देशनान्वितैः ॥ ५८ ॥
यत्र यत्र महासत्त्वो जगाम मुनिपुङ्गवः।
तत्रत्यैः श्रावकैश्चक्रे महासामयिकोत्सवः ॥ ५९ ॥

सविशेषा जिनस्यार्चा व्रतं नानाविधं तथा ।
तद्वच्छ्रीस्वामिवात्सल्यं महान्तो वरघोटकाः॥ १६०॥
आसन्नायां चतुर्मास्यां श्रीमोहनमुनीश्वरः ।
परावृत्तः स ठाणातो लालबागमगात्पुनः ॥ ६१ ॥
अस्यामपि चतुर्मास्यां तपउत्सवदृश्यकाः ।
अभूवन्बहवो येषां वर्णनं ग्रन्थवर्द्धनम् ॥ ६२ ॥
माहात्म्यं मुनिराजस्य श्रीमोहनमनीषिणः ।
यादृगस्ति स्म नो तादृगन्यस्यार्हतयोगिनः ॥ ६३ ॥
गच्छन्तं कुपथं विचारविकलं शार्दूलविक्रीडितं[2]
मोहान्धं प्रसभं महागजमिवोष्ट्रः सत्पथं तत्क्षणम् ।
श्रीमन्तं सुमतिः स्वधर्म इति यो बुद्ध्वा सुधासोदरै-
र्वाग्जालैर्गमयत्यहो स मुनिराड् जेजीयतां मोहनः१६४

इति श्रीउत्तरमोहनचरिते षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

यस्या उदयमात्रेणैवान्तरात्मा विशुध्यति ।
ध्याये तां हारिणीं मन्दो वीणापुस्तकधारिणीम् ॥ १॥

---

१ शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं तु "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति ।

२ अस्त्यत्र मुद्रालंकारः । "सूच्यार्थसूचनैर्मुद्रा प्रकृतार्थपरैः पदैः" इतिलक्षणादिह मोहान्धजनवर्णनपरेण शार्दूलविक्रीडितपदेनास्य वृत्तस्य शार्दूलविक्रीडितनामस्वरूपसूच्यार्थसूचनं मुद्रा ।

पशुर्ना ना पशुर्यस्याः सत्त्वासत्त्वप्रभावतः ।
नृजन्मैकफलां ध्याये वाग्देवीं वाक्पतिस्तुताम् ॥२॥
मुनिवृन्दसहश्लाघवन्दिताङ्घ्रिसरोरुहः ।
विहर्त्तुकामो नो शक्तो विहर्तुं मोहनो मुनिः ॥ ३ ॥
शिष्यान्विहर्तुकामांश्च विहर्तुं निजशासनम् ।
आगन्तुकामानागन्तुमदान्मुनिजनाग्रणीः ॥ ४ ॥
अस्योपदेशतः श्राद्धा जैनभिक्षुशिरोमणेः ।
लग्नास्तपसि यद्धातो गुरुसान्निध्यमर्थ्यते ॥ ५ ॥
सत्सङ्गतौ नरः सन्तो भवन्ति दुर्जना अपि ।
श्रीखण्डसङ्गतो यद्वा बब्बुलश्चन्दनायते ॥ ६ ॥
दुस्सङ्गतो महासत्त्वो मज्जाति व्यसनाम्बुधौ ।
युधिष्ठिरकृतं द्यूतं कस्य नात्र निदर्शनम् ॥ ७ ॥
तस्मात्सत्सङ्गतिः कार्या हेया दुर्जनसङ्गतिः ।
सत्सङ्गतिश्च व्यर्थैव सत्यां दुर्जनसङ्गतौ ॥ ८ ॥
हेयहानादुपादेयमकस्मादपि सम्भवि ।
कृतेऽङ्गसादुपादेये हेयहानं न सम्भवि ॥ ९ ॥
अतो दुर्जनसान्निध्यमुज्झित्वा तत्त्वदर्शिनः ।
मनीषिणः सदा सेव्याः स्वीयकल्याणमिच्छता ॥१०॥
अनुसृत्य न्यायमिमं मोहनो मुनिपुङ्गवः ।
यैः श्राद्धैः सेवितस्तेषां तपस्यैव प्रियाभवत् ॥ ११ ॥

कैश्चिदङ्गीकृतं भक्त्या प्रत्याख्यानपुरस्सरम् ।
सर्वांगमतपः कैश्चिदक्षयो निधिपूर्वकम् ॥ १२ ॥
कर्म्मसूदनतो यस्य यथार्थं नाम चेर्यते ।
तत्तपोऽङ्गीकृतं कैश्चित्कर्म्मसूदननामकम् ॥ १३ ॥
मेरमन्दिरनामादि तपो नानाविधं तदा ।
अभवद्धा यदा यस्य प्रसङ्गस्तत्तदाऽधिकम् ॥ १४ ॥
प्रसङ्गतश्च तपसामभूत्पूजा विशेषतः ।
आष्टाहिकोत्सवः शान्तिस्नात्रं श्रीसङ्घसत्कृतिः ॥१५॥
नन्दीश्वरस्य द्वीपस्य रचना च कलाचणा ।
अभूद्यस्याः प्रसिद्धिर्हि तद्वीपादधिकाऽभवत् ॥ १६ ॥
यद्वास्या रचनातश्च स द्वीपो विदितोऽभवत् ।
तेषां यैर्न श्रुतोऽप्येष महिमा मोहनप्रभोः ॥ १७ ॥
अथ संघः समभ्येत्य प्रार्थयामास मोहनम् ।
भवान्भगवतीसूत्रं श्रावयत्वर्थसंयुतम् ॥ १८ ॥
भवादृशो महावृद्धो महात्मा तत्त्वविद्वरः ।
लभ्यते हि महाभाग्याज्जैनशासनशासिता ॥ १९ ॥
यथा भवान्मौलिमणिर्जैनशासनभिक्षुषु ।
तथा भगवतीसूत्रं जैनागमविभूषणम् ॥ २० ॥
अतः श्रीमन्मुखाच्छ्रोतुमभिलाषा प्रवर्त्तते ।
कृपा चेद्भवतां सा स्यात्सफलार्था मुनीश्वर ॥ २१ ॥

नात्यक्राम्यन्मुनीशोऽपि सङ्घस्याभ्यर्थनामिमाम् ।
नापि तीर्थकृतः संघाभ्यर्थनातिक्रमे क्षमाः ॥ २२ ॥
गगनाङ्गाङ्कभूमाने वर्षे माधवमासके ।
श्रीमद्भगवतीसूत्रं प्रारभन्ते स्म मोहनाः ॥ २३ ॥
उपरिष्टात्पाण्डवानां चरित्रं श्रवणामृतम् ।
भृशं तुतोष संघोऽतः शासनोन्नतिकाङ्क्षिणः ॥२४॥
प्रारम्भस्य दिने श्रेष्ठी देवकर्णो महामनाः ।
विशेषतोऽर्हतोऽर्चादि सशृङ्गारमकारयत् ॥ २५ ॥
पुष्कलैः फलनैवेद्यैर्ज्ञानपूजापि कारिता ।
शान्तिस्नात्रेऽपि केषाञ्चिन्नैतावान्दृश्यते व्ययः ॥२६॥
पुष्कलं द्रव्यमायातं ज्ञानमुद्दिश्य तद्दिने ।
संख्या तु निश्चयाभावाद्दीयते नात्र सम्प्रति ॥ २७॥
श्रीमद्भगवतीसूत्रं पूज्यते स्मान्वहं त्रिभिः ।
देवकर्ण-प्रेमचन्द्र-खुशालाख्यैर्वणिग्वरैः ॥ २८ ॥
दक्षिणायां प्रतिदिनं मुद्रा चैभिः स्म दीयते ।
सत्सु चान्येषु प्रथममेषां नामैव गीयते ॥ २९ ॥
समाप्ते शतके श्रीमान् देवकर्णो ह्यकारयत् ।
पूजां प्रभावनां रम्यां तीर्थनायकसंस्कृतिम् ॥ ३० ॥
आयाताथ चतुर्मासी विश्वाविश्वमहोत्सवा ।
तडत्तडतडत्ताडैस्ताडयन्ती स्वडिण्डिमम् ॥ ३१ ॥

इयं चापि चतुर्मासी तपोदानोत्सवादिभिः ।
पर्याप्ता स्म व्यतीताभ्यः सर्वाभ्यः प्रातिरिच्यते ॥३२॥
अस्यामेव चतुर्मास्यां श्रेष्ठिसंघशिरोमणेः ।
गृहे च पन्नालालस्य पूर्णचन्द्रात्मजन्मनः ॥ ३३ ॥
सप्त च व्यक्तयस्त्वष्टौ वासरान्पर्युपोषिताः ।
आनीता तत्प्रसङ्गेन तीर्थकृत्प्रतिमा गृहे ॥ ३४ ॥
दृश्यं यथर्द्धि समवसरणस्यापि कारितम् ।
विश्वोत्सवशिरोरत्नमुत्सवश्चाष्टभिर्दिनैः ॥ ३५ ॥
तीर्थकृद्बालशयनं दोलायां यत्प्रतीयते ।
गृहीतमेभिस्तद्धर्षे श्रीपर्यूषणपर्वणि ॥ ३६ ॥
तदङ्गीकरणे रूप्यसहस्रं षट्शताधिकम् ।
सद्भक्त्या व्ययितं सद्भिर्भवभ्रमणभीरुभिः ॥ ३७ ॥
लालबागाद्गृहं चैषा दोलानीतातिभावतः ।
निर्घाटितो घटाटोपात्सुन्दरो वरघोटकः ॥ ३८ ॥
अमुष्मिन्त्समये श्रीमद्धर्म्मचन्द्राङ्गजन्मना ।
शुभोदयेनोदयेन प्राकार्याष्टाहिकोत्सवः ॥ ३९ ॥
तितीर्षता भवाम्भोधिं चक्रेऽनेन महर्द्धितः ।
भाद्रशुक्लत्रयोदश्यां स्वामिवात्सल्यमुत्तमम् ॥ ४० ॥
दिङ्मात्रमुक्तं किन्त्वस्यां ज्ञेयमेवंविधं बहु ।
निष्पन्नं सत्परीणामं कर्म्म मोहनसत्त्वतः ॥ ४१ ॥

परावर्ति चतुर्मासी देवकर्णगृहे नवे ।
मुदा विठ्ठलवाडीतिनाम्न्यां वीथ्यां मुनीश्वरैः ॥ ४२॥
गच्छत्सु मुनिराजेषु शासनोन्नातिकारिभिः ।
तदा श्रेष्ठिदलैः सार्द्धमन्वितं वरघोटकैः ॥ ४३ ॥
पूजाशृङ्गारश्रीसंघसत्कारादि तदा कृतम् ।
श्रेष्ठिना देवकर्णेन कर्णकीर्तिजिगीषुणा ॥ ४४ ॥
समाप्तायां चतुर्मास्यां मोहनर्षिर्महामनाः ।
विहर्तुमैच्छन्मुनयो भवन्ति विहृतिप्रियाः ॥ ४५ ॥
व्याख्यानावसरे दृष्ट्वा समयं मोहमोहनः ।
मोहनो मुनिशार्दूलः स्वेच्छामाविश्चकार ह ॥ ४६ ॥
श्रुत्वेति श्रावकाः सर्वे छिन्नमूलद्रुमा इव ।
शुष्काङ्गपल्लवा जाता भक्तिरेषामहो नवा ॥ ४७ ॥
प्रोचुश्चैकमुखाः सन्तो भगवन्भक्तवत्सल ।
अस्मिन्गारिष्ठे वयसि भवतेदं किमुच्यते ॥ ४८ ॥
मुनीनामेष आचारो यद्यप्यस्ति महामुने ।
भवादृशानां ज्येष्ठानां नो तथापि मुनीश्वर ॥ ४९ ॥
भवादृशं वयं साधो धर्म्मज्ञं धर्म्मतत्परम् ।
धर्माचार्यं क्व लप्स्यामश्चन्दनं न वने वने ॥ ५० ॥
प्रसीद भगवन्सर्वसत्त्वरक्षाधृतव्रत ।
स्वभक्तान्बोधविकलान् रक्ष रक्ष महाव्रत ॥ ५१ ॥

एवंविधैर्युक्तियुक्तैर्वचोभिः श्राद्धसत्तमाः ।
प्रार्थ्य श्रीमन्महाराजं निपेतुस्तत्पदान्तिके ॥ ५२ ॥
महाराजोऽपि सौम्यात्मा दृष्ट्वा तेषां महाग्रहम् ।
तत्रास्थादथवा चान्नजलयोगोऽपि कारणम् ॥ ५३ ॥
प्रवृत्तं च यथापूर्वं धर्म्मकृत्यं दिने दिने ।
वसन्ते विकसेदेव किंशुको हि वने वने ॥ ५४ ॥
वृद्धत्वाद्रोगसञ्चारात्प्रकृतेरन्यथात्वतः ।
नो व्याचष्टे कदाचिच्चेन्मोहनो हतसाहसः॥ ५५ ॥
तदा तच्छिष्यमहितः पन्यासास्पदसंस्कृतः ।
श्रीमद्धर्षमुनिः पट्टमध्यास्याख्याति देशनाम् ॥ ५६ ॥
मितवाक्त्वाद्यथासूत्रोपदेशित्वान्महामुनेः ।
श्रुत्वा जहर्षुर्व्याख्यानं श्रीहर्षस्याखिलाः प्रजाः ॥५७॥
ऊचुश्चान्योन्यमिलिता हर्षो वक्ति यथाश्रुतम् ।
न चान्यवक्तृवन्मिष्टं प्रजल्पति सुरोचकम् ॥ ५८ ॥
अयं स्वधर्ममर्म्मज्ञो मोहनर्षिरिवास्ति भोः ।
वचोऽस्य सत्यमस्माकं शिरोधार्यं प्रमात्वतः ॥ ५९ ॥
मोहनर्षिगुणग्राम एतस्मिन्नस्त्यशेषतः ।
इदं मोहनपादाब्जचिरसेवाफलं जनाः ॥ ६० ॥
मोहनर्षिरपि श्रुत्वा हर्षे शिष्यशिरोमणौ ।
विश्वासं श्राद्धजातस्य जहर्षार्षविचारणः ॥ ६१ ॥

पप्रच्छ चागताञ्छ्रोतॄन्कदम्बककदम्बकान् ।
कथङ्कारमयं वक्ति भवद्भ्यो रोचते नवा ॥ ६२ ॥
मितं वक्ति प्रियं वक्ति वक्ति सूत्रानुसारतः ।
किंवा प्ररोचकैर्वाक्यैरुत्सूत्रैर्वञ्चयत्यहो ॥ ६३ ॥
धर्म्मोपदेशसमये तर्कैश्छद्मस्थसाधुभिः ।
नो कर्त्तव्यो यथासूत्रं वक्तव्यमिति मे मतिः ॥ ६४ ॥
मोहनर्षेरिमां वाचं श्रुत्वा श्रावकसत्तमाः ।
ऊचुरेकमुखा बद्धाञ्जलयो मुनिसत्तमान् ॥ ६५ ॥
सत्यं वक्ति मितं वक्ति वक्ति सूत्रानुसारतः ।
नो नः प्रतारयत्येष धर्म्मभीरुः सदाशयः ॥ ६६ ॥
किं ब्रूमो भगवन्दृष्ट्वा श्रीमद्धर्षमुनेर्गुणान् ।
तथा वयं प्रसन्नाः स्मो यथा भावत्कदर्शनात् ॥ ६७ ॥
एतस्मिन्नन्तरे कैश्चित्पृष्टः श्रीमोहनप्रभुः ।
भगवंस्तव शिष्येषु कोऽलङ्कर्त्ता भवत्पदम् ॥ ६८ ॥
श्रुत्वा चैतत्परैः प्रोक्तं प्रस्तावोऽयं निरर्थकः ।
सद्यो योऽलङ्करोत्येष एव चालङ्करिष्यति ॥ ६९ ॥
न श्राद्धैर्न महाराजैर्दत्तं चास्मा इदं पदम् ।
मान्यमान्यैर्भगवतीसूत्रैर्दत्तमिदं पदम् ॥ ७० ॥
युक्तियुक्तमिदं वाक्यं श्रुत्वा सन्दर्भसंयुजम् ।
मोहनर्षिर्जहासोच्चैः समं श्रावकवृन्दकैः ॥ ७१ ॥

श्रीमद्भगवतीसूत्रस्याज्ञैवास्ति गरीयसी ।
तत्कृतं नान्यथा भावीत्यवोचच्च स्फुटं वचः ॥ ७२ ॥
इतः प्रभृति च प्रायो मुनिपद्मविभावसुः ।
न व्याख्याति विरुग्णात्मा मोहनर्षिरमोघदृक् ॥ ७३ ॥
कदाचित्कारणे प्राप्ते वायातायां महातिथौ ।
संघानुरोधतः पट्टमधितिष्ठति केवलम् ॥ ७४ ॥
व्याख्यानं तु महासत्त्वो विशिष्टो मुनिसत्तमः ।
श्रीमद्धर्षमुनिर्नित्यं करोति महितो जनैः ॥ ७५ ॥
देवचन्द्रस्य तनया विजयादिकुमारिका ।
निधानं शुभहेतूनामुपधानमकारयत् ॥ ७६ ॥
नयनाङ्गाङ्कभूमाने १९६२ नर्मदोत्तरविन्ध्यके ।
नर्मदादक्षिणे चन्द्रषडङ्केके १९६१ च वत्सरे ॥ ७७ ॥
ज्येष्ठे मासि शुभे पक्षेऽभवच्चेदं वरं तपः ।
निविष्टाः शतशश्चास्मिञ्जना जैनमताश्रयाः ॥ ७८ ॥
अन्तरेणानुशुभकं विघ्नं धर्मप्रभावतः ।
सर्वैस्तत्र निविष्टैश्च वासरा अतिवाहिताः ॥ ७९ ॥
समाप्तेऽस्मिन्व्रते धन्याः कर्मठाः श्रीतपस्विनः ।
अलंकृता मालिकाभिर्जयस्रग्भिः शिवाश्रियः ॥ ८० ॥
अस्यापि कर्म्मणः श्रीमद्धर्ष एव मुनीशिता ।
आसीत्प्रयोजको यद्वा गणस्यैष प्रवर्तकः ॥ ८१ ॥

काले काले मुनेरस्योपदेशादुत्सवादिकम् ।
बभूव सुखतो येन गच्छन्ति शुभवासराः ॥ ८२ ॥
गन्तुकामस्य वृद्धस्य श्रीमोहनमहामुनेः ।
समागता चतुर्मासी गमनप्रतिबन्धिका ॥ ८३ ॥
आरब्धायां चतुर्मास्यां जहर्षुः सकलाः प्रजाः ।
फलीभूते मनोभीष्टे हर्षः कस्य न जायते ॥ ८४ ॥
लग्नाश्च श्रावकाः कर्त्तुं तपोदानादिकं शुभम् ।
ज्ञातानुष्ठेयकृत्याः श्रीमुनिराजोपदेशतः ॥ ८५ ॥
दानेन धानिभिः कैश्चित्समानेन निजं धनम् ।
सस्वं सफलितं भक्त्या भवभ्रमणभीरुभिः ॥ ८६ ॥
कैश्चिद्भव्यैर्भवोद्विग्नैः सञ्चितं किल्बिषं बहु ।
दग्धं तपोऽग्निना चात्मा कृतश्चामीकरप्रभः ॥ ८७ ॥
विश्वस्यां च चतुर्मास्यां कैश्चित्स्वर्गापवर्गदम् ।
सुशीलितमहो शीलं हृषीकैः संयतैर्नरैः ॥ ८८ ॥
केचिद्भव्या भवापारदवदावानलोपमाम् ।
भावनामा चतुर्मासीं भावयामासुरग्रिमाम् ॥ ८९ ॥
कैश्चिच्चतुर्भिरामोदपूर्वकं धीधनैर्नरैः ।
धर्म्म आराधितो यत्तदधीना सर्वसम्पदः ॥ ९० ॥
प्राप्ते चैतादृशे योगे कैश्चिन्नोपार्जितं शुभम् ।
दूरभव्या अभव्या वा श्रूयन्ते चाथवागमे ॥ ९१ ॥

मुनीनां वीतरागणां कल्मषध्वंसकारिणाम् ।
संसर्गाद्यो न बुध्येत हतभाग्यः स उच्यते ॥ ९२ ॥
सहित्वा शतशो दुःखं मुनयोऽमी धृतव्रताः ।
अपकाराय जन्तूनां न भवन्ति कदाचन ॥ ९३ ॥
एतानपि च ये श्राद्धा निन्दामारोप्य कल्पिताम् ।
हसन्ति तेषां नो मन्ये संसारः पर्यवस्याति ॥ ९४ ॥
अपमानं न कस्यापि कर्त्तव्यं कुहचिज्जनाः ।
अपमानं यतो मृत्योराधिकं दुःखकारणम् ॥ ९५ ॥
परापकार्यमननं नो कर्त्तव्यमकारणम् ।
यथाशक्ति निजं कार्यं कार्यं कार्यविदां मतम् ॥ ९६ ॥
अथो भगवतीसूत्रं श्रीमद्धर्षमुनेर्मुखात् ।
भाद्रशुक्लत्रयोदश्यां समाप्तिमगमत्सुखात् ॥ ९७ ॥
पूजा ज्ञानस्य प्रथमं बहूपकरणैः सह ।
देवकर्णैः कृता यद्वा कुत्र नाग्रेसरा इमे ॥ ९८ ॥
सप्रेम प्रेमचन्द्रेण केशवात्मभुवा सता ।
तथा खुशालचन्द्रेण कृता पूजा विशेषतः ॥ ९९ ॥
अन्यैश्च श्रावकैः सर्वैर्यथाशक्ति सुपूजनम् ।
कृतं येनोच्छलद्वारं ज्ञानागारं बभूव ह ॥ १०० ॥
पर्वराजे समायाते श्रीमत्पर्युषणे तपः ।
सहोत्साहैः कृतं श्राद्धैर्मुनिराजोपदेशतः ॥ १०१ ॥

मासक्षपणकं कैश्चित्कैश्चिच्चाष्टाह्निकं तपः ।
कृतं कैश्चिन्महाकर्मसूदनप्रभृतीनि च ॥ १०२ ॥
तिलकश्रेष्ठितनयभाइचन्द्रस्य धर्मिणः ।
तप आष्टाह्निकं चक्रे पत्नी पतिमनुव्रता ॥ १०३ ॥
प्रियामनोनुगः श्रीमान्भाइचन्द्रो वणिग्वरः ।
तत्प्रसत्त्यर्थमादत्त दोलां भवभयापहाम् ॥ १०४ ॥
आदानेऽस्या व्ययो भूयान्बभूवास्य महामतेः ।
तदर्थं श्रेष्ठिनः प्रायो यतन्ते हि हितैषिणः ॥ १०५ ॥
तस्मिन्नवसरेऽनेन घटाटोपमनोहरः ।
द्रष्टृदृक्स्तम्भजननः सज्जितो वरघोटकः ॥ १०६ ॥
पञ्चम्यां भाद्रशुक्लस्य संघजातस्य पारणा ।
कारिता वणिजाऽनेन भाइचन्द्रेण धीमता ॥ १०७ ॥
मुनिराजोपदेशेन लालबागे पुरातने ।
विशालामायतामेष धर्मशालामकारयत् ॥ १०८ ॥
चतुस्त्रिंशत्सहस्रेण धनेनैषा मनोहरा ।
निष्पन्ना यत्र तिष्ठन्ति यात्रिकाश्च सहस्रशः॥ १०९ ॥
सम्पन्नेऽस्मिन्गृहे संघकार्यं भवति सर्वतः ।
तेन संघो ददात्यस्मै धन्यवादमनल्पशः ॥ ११० ॥
वस्तुतो धन्यवादस्य पात्रमेवायकं खलु ।
अर्द्धभागः श्रियो येन व्ययितो धर्म्मकर्मणि॥ १११ ॥

ईदृश्यस्य मतिर्जाता मुनिराजोपदेशतः ।
संसर्गमहिमा कश्चिदस्ति सर्वमहत्तरः ॥ ११२ ॥
पूर्णचन्द्राङ्गभूः श्रीमत्पन्नालालोऽप्यचीकरत् ।
अथाश्विने वाटिकायां निजायामुपधानकम् ॥ ११३ ॥
तपस्विनः स्थितास्तत्र बहुशो वशिनो मुदा ।
यद्वा श्रावकजातीनामावश्यकमिदं तपः ॥ ११४ ॥
तपोऽन्ते कार्तिके कृष्णे मालिकाभिरलंकृताः ।
तपस्विनो महात्मानोऽनल्पश्रद्धापुरस्सरम् ॥ ११५ ॥
तस्मिन्नेव दिने रम्यो निःसृतो वरघोटकः ।
देवयानसमा यत्र रथाः सन्ति शताधिकाः ॥ ११६ ॥
अष्टौ दिनानि श्रीतीर्थनाथम्बिबार्चनं मुदा ।
सश्रृङ्गारं विशेषेणाभूत्तथाष्टाहिकोत्सवः ॥ ११७ ॥
लालबागेऽप्यभूदस्मिन्वर्षेऽक्षय्यफलावहम् ।
उपधानं तपः श्रीमन्मोहनर्ष्युपदेशतः ॥ ११८ ॥
अत्रस्थाः क्षीणकर्माणो महात्मानस्तपस्विनः ।
श्रेष्ठिना देवचन्द्रेण मालिकाभिरलंकृताः ॥ ११९ ॥
अनेन श्रेष्ठिवर्येण चाष्टभिर्दिवसैः कृतः ।
महो महांस्तथा चान्यत्सुकृतं भवभञ्जनम् ॥ १२० ॥
श्रीसंघेन कृतं श्रीमत्स्वामिवात्सल्यमुत्तमम् ।
स्नातानुलिप्ता आभान्ति श्राद्धा यत्र सहस्रशः॥१२१॥

सदा शान्तिकरं शान्तिस्नात्रं दात्रं कुकर्म्मणः ।
बहूपकरणैः श्राद्धैः कृतं मुनिजनान्वितैः ॥ १२२ ॥
अन्यान्यपि सुकर्माणि बभूवुर्बहुशोऽन्वहम् ।
यद्वा किमपि सत्कृत्यमास्ते स्मात्र न संशयः ॥ १२३ ॥
इयं चापि चतुर्मासी व्यतीताभिनवैः शुभैः ।
कर्म्मभिर्मुनिराजस्य मोहनर्षेर्जितात्मनः ॥ १२४ ॥
विविधधर्म्मप्रवर्त्तनतत्परो ह्यभिनिवेशतमोहृदहस्करः ।
सुमरमोहमहेभमृगेश्वरो जयतु मोहनलालमुनीश्वरः १२५
इति श्रीउत्तरमोहनचरिते सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

वाणीशार्चितपादाब्जां वाणीं वन्दे प्रतिक्षणम् ।
यां विना दृश्यते हं हो अन्धकारमयं जगत् ॥ १ ॥

द्विषष्ट्युत्तरैकोनविंशतिशततमाब्दारम्भे सततमात्मोद्धरणकरणसदाचरणमननचणो मुनिराट् श्रीमोहनलालश्चिरातिशयप्रार्थनातः सांसारिकसुखासाधारणकारणषट्कसम्पन्ननिजजैनधर्मकरणकारणानुमोदनैकमनसः सा-

१ द्रुतविलम्बितं वृत्तम् । लक्षणं तु “ द्रुतविलम्बितमाह नभौ भरौ ” इति ।

करचन्द्राङ्गभववाडीलालस्य श्रेष्ठिनोऽभिनवं चम्पानाम वीथिकाशिरोऽलङ्कारभूतमागारं समं शिष्यैःपुनाति स्म।

भवभ्रमणभयभीतभव्यजनहृदयभवनलीनातिप्राचीनमलिनसंस्कारतिरस्कारस्फारभास्करे मुनिजने गच्छति जयध्वनिनातुर्यतारवेण च खं पूर्णोदरभाण्डं चक्रे। सत्यापितं च वरघोटकहृद्यकेन वसुंधराया वसुंधरेति नाम श्रावकैस्तदानीम्। कृतं च तस्मिन्वासरे सविशेषमशेषकलुषवनवनानलः पूजाप्रभावनासाधर्मिकवात्सल्यादि शुभकृत्यं श्रावकशिरोमणिना वाडीलालेन।

अनेन श्रेष्ठिना तत्र स्थित्यै बहुप्रार्थ्यमानोऽपि मुनीश्वरो द्वित्राण्येव दिनानि स्थित्वा धर्मं चोपदिश्य विहर्तुकामोऽत्युत्सवसमलंकृतः पुनर्लीलबागमध्यासाञ्चक्रे। परन्त्वागमनसमनन्तरमेव प्रचण्डव्याधिमण्डलाकाण्डताण्डवितत्वान्न विहर्तुं शशाक।

अथवा।

यस्मिन्देशे यदा यच्च भोक्तव्यं तत्र तत्तदा।
अस्त्यवश्यं भुज्यते नो काचिदत्र विचारणा॥ २॥

अथ पूर्णचन्द्रश्रेष्ठिजन्मानो जीवनलालादयः पायधुनी—ताम्बाकांटा—सविधसर्वजैनजनसुगमार्थमहार्थव्ययकारितातिविशालपञ्चशालमहेन्द्रमन्दिरानुकारिविद्या-

मन्दिरवास्तुसमये तत्र गन्तुं सहर्षं सहर्षं मुनिराजं श्रीमन्मोहनलालं नत्वा तच्चरणयुगलमभ्यर्थयामासुः ! अलंकृतश्च सविद्यैः स विद्यालयो मोहनलालादिमुनिप्रवरैः। निष्कासितश्च तस्मिन्समयेऽदृष्टश्रुतपूर्वो महाघटाटोपो वरघोटको जीवनलालादिभिः शासनोन्नतिमिच्छद्भिः । कृतश्चाष्टकर्मदलनप्रवण आष्टाह्निकोत्सवस्तैरेव कुबेरसहोदरैस्तत्र। ततः स्थित्वा तत्राष्टौ दिनानि तथैवाजग्मुर्मुनिराजाः पुनर्लालबागम् ।

अथ भवदुपदेशामृतपानप्राप्तास्तिक्यतमास्मत्कारितामतिनोरमजिनालये प्रतिष्ठा भाविनी तत्तत्र श्रीमद्भिरवश्यं गन्तव्यमिति देणुवास्तव्यः संघः सविनयं मुनिनायकं विज्ञापयामास । स्वयं गन्तुमशक्नुवानो मोहनमुनिस्तत्प्रार्थनया जयनयकल्याणाभिधांस्त्रीन्मुनींस्तत्र गन्तुमनुमेने । तेऽपि तत्र गत्वा यथाविधि निर्दिष्टमुहूर्ते जितरागं जिनराजं प्रतिष्ठापयाञ्चक्रिरे । अतिहर्षपुलकितरोमाञ्चकलिकाः श्रावकाः समहोत्सवमाष्टाह्निकोत्सवं साधर्म्मिकवात्सल्यं च निश्शल्यं चक्रुः । मन्दिरमुद्दिश्य घृतादितोऽष्टादशसहस्रसंख्यावच्छिन्नं द्रव्यं तदानीमुत्पेदे।

अथ मुनिकैरवकुमुदिनीनायको मुनिमोहनलालो

धर्म्मोपदेशतस्ताराचन्द्राङ्गभुवं पानाचन्द्रं तत्पत्नीं हीराकुमारीं च चतुर्थव्रतमङ्गीकर्तुमुपदिदेश। तावपि जम्पती त्वरितमेव तदुपदेशमङ्गीचक्राते। तत्प्रसंगत उद्यापनाष्टाहिकोत्सवाष्टोत्तरस्नात्रसाधर्म्मिकवात्सल्यादिकृत्यजातं सहस्रपञ्चकव्ययेन कृत्वा धन्यवादमवापतुः।

अथ वैशाखे मुनिजनमनोनभोनभोमणिः श्रीमोहनलालो मुनिराट् थाणावासिश्रावकमहाग्रहात्तत्र गत्वा प्रतिष्ठां चकार। तदवसरे तत्रत्यः संघो महोल्लासपूर्वकमाष्टाहिकोत्सववरघोटकस्वामिवात्सल्यदानादि शुभकृत्यं प्रशंसनीयं चक्रे।

मोहनर्षिरपि प्रत्यासन्नं चातुर्मास्यमवलोक्य तत्र कतिचिदेव दिनान्युषित्वा ततो विहृत्य पुनर्लालबागमियाय। प्रारब्धं चातुर्मास्यं लग्नाश्च श्रावकाः प्रतिवर्षतो विशेषतस्तपआदिशुभकर्म्मसु। अस्यामपि चतुर्मास्यां यादवजितनुजन्मामीलालादिभिः शान्तिस्नात्राष्टाहिकोत्सवसाधर्मिकवात्सल्याद्यनेकविधं शुभकर्म्म क्रियते स्म ।

समारब्धे त्रिषष्ट्युत्तरैकोनविंशतिशततमेऽब्दे मोहनर्षिः सह हर्षादिशिष्यगणेन माधवोद्याने चातुर्मास्यं परावर्त्तितवान्। तदवसरे कर्पूरचन्द्रतनुजनुषा श्रीहर्ष-

चन्द्रेण श्रेष्ठिनातिघटाटोपेरम्यं वरेघाटकं निष्कास्य प्रजागणचक्षुषी मोद्येते स्म। कृता चानेनैव श्रेष्ठिना नारिकेलफलैर्मोदकैश्च प्रभावना।

अथ संजातरुजो मोहनर्षिर्जलवातपरिवर्त्तनायान्धेरीमुद्दिश्य समं कल्याणमुनिना विजहार। श्रुत्वा चागच्छन्तं मुनिराजं तत्रत्यश्रावका धन्यमात्मानं मन्यमानाः पुरत एव दुधुविरे। गते च मुनिराजे तत्राष्टाहिकोत्सवस्वामिवात्सल्यादि कृत्यं सहसैवातेनिरे च। मोहनर्षिरपि वन्दनार्थं मोहमयीत आगतान्महर्द्धिकान्सम्यगुपदिश्य तत्रस्थदेवालयव्ययकृते पुष्कलं द्रव्यं दापितवान्।

यद्वा।

मुनयस्तत्त्ववेत्तारः शासनोन्नतिहेतवे।
यथा यतन्ते नो तद्वदात्मसंरक्षणाय च॥ ३॥

स्थित्वा च तत्र कतिचिद्दिनानि शरीरं सुस्थमिवानुभवन्पुनर्लालबागमाससाद। अनुदिनसानुनयस्वशासनोपदेशनश्रवणमननजनितातिपुनीतसम्भावनातीततत्त्वविदनुग्रहगृहीतविषविषयवैराग्यां माणिक्यचन्द्रात्मजातिलकचन्द्राङ्गजां सप्रत्याख्यानचतुर्थव्रतदानतोऽसारातिप्रसरसंसारसरित्स्वामिन उद्धार च।

तत्समयेऽतिप्रसन्नया ह्रीनाम्न्या तयाष्टाह्निकोत्सवस्वामिवात्सल्यप्रभावनातिरम्यज्ञानस्थापनादिशुभकृत्यं कारयाञ्चक्रे। अहो धन्यतमैषानुस्मरणीयचरितान्यवनिताभिः ।

यतः ।

धनं लक्षमितं यस्या वयः षोडशवार्षिकम् ।
रूपं रतिमदध्वंसि स्वास्थ्यं चापि निरन्तरम् ॥ ४ ॥

अथ मुनिकुलकुमुदकुमुदिनीपतिः श्रीमोहनर्षिरनुभवचक्षुषात्मीयपर्यवसानसमयसमागमनायात्यल्पविलम्बमवलोकमानोऽखिलैः श्रावकमहोदयैस्तत्रैव स्थातुं बहु प्रार्थ्यमानोऽपि समं दशभिर्हर्षादिभिः शिष्यैर्मोहमयीतो माघकृष्णत्रयोदश्यां विजहार ।

यतः ।

मुनीनां वीतरागाणां जनताऽज्ञानमोषिणाम् ।
आसक्तिर्नो शरीरे चेत्कुतो ग्रामगृहादिषु ॥ ५ ॥
वासनावशसंजाता नरा बध्नन्ति संसृतिम् ।
तस्मात्सा सततं हेया हेयोपादेयदर्शिना ॥ ६ ॥

विहृतेषु मुनिराजेषु तद्विरहखिन्नचेतसो मुनिभिर्वार्यमाणा अपि सहस्रशः श्रावकमहोदया अनुजग्मुः। मुनिप्रवरश्रीमोहनमुन्युद्देशजनितजनतानन्ददायकान-

न्दसमयोऽपि मोहमयीतो विजहार । साकं शिष्यैः श्रावकैश्च तद्दिने भायखलामलंकृतवान्मुनिराजः । तत्र संघेन सविशेषं पूजादिकृत्यं चक्रे। समाप्तायां विभावर्य्यां दृष्टिपथमायाते चाहस्करेऽश्वरथादिभिः परिमर्दितेऽध्वनि शिष्यैः श्रावकैश्च परिवृतो मोहनमुनीश्वरस्ततो विहृत्य माहिमं जगाम। तत्र च मुनिराजमभि गन्तुं परश्शता अपरेऽपि श्रावका आगच्छन्ति स्म। तस्मिन्दिने पूजास्वामिवात्सल्यादिकृत्यं रत्नजी–मोहनजी, उत्तमचन्द्र–खेमचन्द्र, गुलाबचन्द्र–हेमराजैर्मोहमयीवास्तव्यैः श्राद्धैश्चक्रे । अतिशिथिलप्रकृतिं मुनिराजमवलोक्य पुनर्मोहमयीमलङ्कर्तुं प्रार्थयाञ्चक्रिरे सर्वे। परन्तु नेत्युक्त्या मुनिराजस्तेषां तां प्रार्थनां विफलां चकार ।

यद्वा ।

अरण्यानी व्रजो ग्रामो नगरं वा पुरी तथा।
मुनीनां वीतरागाणां सर्वमेतत्समं स्मृतम् ॥ ७॥

ततो विहृत्य मुनिराजः शान्तिकुञ्जालङ्कारभूतं वाडीलालशाकरचन्द्रागारमलञ्चकार ।

श्रीमन्मोहनर्षिवन्दनार्थमागता विठ्ठलभाई–वाडीलाला–मीलाल–यादवजीप्रभृतयः श्राद्धाः श्रीगुरुचर-

णचिरस्मरणार्थं किञ्चित्सत्कृत्यं मोहमय्यां स्थापनीयमिति विचारमुत्थापयाञ्चक्रुः ।

मोहनर्षयस्तु ततो विहृत्य मलारग्रामे देवकर्ण-मूलजीगृहं पुनन्ति स्म। तस्मिन्दिने सविशेषं देवपूजा-साधर्मिकसत्कारादि देवकर्णेन श्रेष्ठिना कृतम्। अत्रापि मुनीश्वरं वन्दितुमागतैर्महर्द्धिकैः श्रेष्ठिभिर्विठ्ठलदासाद्यु-त्थापितविचारोऽतिपुष्टोऽक्रियत ।

यतः ।

प्रशस्यो व्यवहारोऽयं श्रावकेष्वेव दृश्यते ।
समष्टिर्धर्म्मकार्ये यज्जहाति विमतं मतम् ॥ ८ ॥

अथ मुनयस्ततो विहृत्य भाइन्दरवासिनोऽलभ्य-लाभशालिनश्चक्रुः । सुप्रसन्नमनसस्ते पूजाशृङ्गारस्वा-मिवात्सल्यादिकृत्यं बाढं कुर्वन्ति स्म । अत्रैव विठ्ठलदा-साद्युत्थापितो विचारः श्रीमन्महाराजदर्शनार्थमायातैः श्रेष्ठिजीवनलाल–पानाचन्द्र, गोकुलभाई–मूलचन्द्र, वी-रचन्द्र-दीपचन्द्र, देवकर्ण-मूलजी, प्रभृतिभिर्यक्षराजसहो-दरैः श्रावकैरस्मिन्कृत्येऽहमेतावद्द्रव्यं दास्याम्यहमेताव-दित्युक्त्या सफलीकृतः ।

मुनयस्तु ततो विहृत्य वशायीं प्राप्ताः । तत्रापि मोहमयीतस्तत्रान्ततश्च भूरिशः श्रावकमहोदया मुनि-

राजान्वन्दितुमागताः। तस्मिन्नपि दिने पूजाशृङ्गारस्वामिवात्सल्यादि कृत्यं बाढमेव कृतं तत्रत्यैः श्रावकैः।

माघकृष्णामायां (फा. कृ. ३०) मुनयस्ततो विहृत्यागासीमलञ्चक्रुः। तत्रापि मुनिमहाराजं वन्दितुं मोहमयीतः श्रावकाः श्राविकास्तत्प्रान्ततश्च बहुशः समाजग्मुः। तत्रस्थैर्मुम्बईवास्तव्यैश्च श्रावकैस्तस्मिन्दिने पूजासाधर्मिकसत्कारादि साधु कृतम्।

फाल्गुनशुक्लप्रतिपदि मुनिराजास्तत्रैव तस्थुः। तस्मिन्दिने पूजाशृङ्गारसाधर्मिकसेवादिकार्यं मोहमयीत आगतेनालङ्कारव्यापारिणा मरुजन्मना केनचित्प्रशंसनीयमक्रियत।

अथ ततो त्वरितमपि गन्तुमीहमानो मुनिः श्रीमोहनलालमहोदयस्तत्रत्यश्रावकानां श्रद्धापाशानुकृष्टइव विहर्तुं न शशाक।

तदा तत्र सूर्यपुर (सुरत) वास्तव्या मुनिराजानां भक्तेषु प्रथमे कर्पूरचन्द्रात्मजनगीनदास–लल्लूभाइतनुजरूपचन्द्रादयः केचन श्रावका वन्दनार्थमाव्रजन्। मुनिराजोऽपि कृतवन्दनांस्तान्धर्मलाभोत्तरं भक्तवत्सलतया सुखादिकुशलजातमपृच्छत्। समुपादिशच्च बहुविधं धमर्मगार्म्।

तदानीमेव च ललुभाइश्रेष्ठिपुत्रो रूपचन्द्रश्रेष्ठी कर्त्तारग्राममन्दिरवर्षग्रन्थिदिवसे स्वामिवात्सल्यपूजाप्रभावनार्थमेकविंशतिसहस्रमितं द्रविणं दत्वा संघाधीनमकरोत्। अद्यापि यदीयायेन वर्षग्रन्थिदिवसे प्रतिवर्षं स्वामिवात्सल्यपूजाप्रभावनादि भवति भविष्यति चायस्य नियतत्वाद्बहुकालम्।

तदैव च लेखाजीजवणजीतिप्रसिद्धः कश्चिच्छ्रावकप्रवरः पूर्वदानसमुत्साहित इव कर्त्तारग्रामे चैत्रशुक्लपौर्णिमायां यात्रार्थमागतानां सधर्मणां वात्सल्यार्थं सहस्रपञ्चकं संघस्वाधीनमकरोत्। अहो उपदेशोऽहो उपदेशोऽहोदानमहो दानमिति ध्वनिनाद्यापि कदाचिन्न पूर्णं ब्रह्माण्डभाण्डं तथा कृतम्।

मुनयोऽपि तत्र दिनद्वयं स्थित्वा यथाक्रमं विहृत्य देणुवास्तव्यानां श्रावकानां मनोरथद्रुमं समसफलयत्। देणुनिवासाः श्रावका अपि मुनिप्रभाकरं वीक्ष्यात्तीव विकाशमापुरितिविषये तेषां प्रवरनगरसमनुकारिणं सामयिकसुष्टूत्सवमेव प्रमापकत्वेन सहृदयाः स्तुवन्ति स्म।

ततस्तत्समयानुगतोपदेशो मुनिमहोदयोऽपि तथोपदिदेश येन तत्क्षणमेव श्रावकैः साधारणद्रव्ये चिरात् स्थितं देवद्रव्यं तत उद्धृत्य देवद्रव्यभाण्डागारे निक्षिप्तम्।

तत् साधारणद्रव्यं च किंचित्किंचिद्दत्वा तावत्कृतं स्वामिवात्सल्येन समम् ।

मुनिना श्रीमोहनलालेनापि समं शिष्यैः विहृतम् । मिलिताश्च यतस्ततो दर्शनमुद्दिश्य समायाताः शिष्यप्रशिष्या विदिततपोयशसो यशोमुनिप्रभृतयो महात्मानः । उपलब्धं च परमपुण्यानां प्रायः सर्वेषामेव शिष्यतच्छिष्यप्रशिष्याणां दूरस्थानामपि महाप्रयासानां श्रीयशोमुनि—कान्तिमुनिप्रभृतीनां परमगुरोर्दर्शनमत्यानन्दकन्दकरं तदानीम् । कृतप्रयत्नानामपि केषाञ्चित्केशरमुनिप्रभृतीनां कर्मापराधत्वान्न प्राप्तं परमगुरोः प्रान्तदर्शनम् ।

श्रीमोहनमुनिर्मन्त्रसिद्धोपदेशो बगवाडा—पारडी—ग्रामादौ सुसरसभाषयोपदेशं दत्वा जीर्णानि देवमन्दिराणि नूतनानि कारयामास । प्रत्येकमन्दिरसंस्कारे विंशतिः सहस्रं व्ययोऽभूदिति जनश्रुतिः ।

अथ परमदूरदर्शी श्रीमोहनर्षिः संयोगवशातः समुपसन्नान् श्रीपन्यासयशोमुनि - कान्तिमुनि - पन्यासहर्षमुनि-देवमुनि - हेममुनि-कल्याणमुनि-पद्ममुनि-कमलमुनि-ऋद्धिमुनि-शुभमुनि-क्षमामुनिप्रभृतीन्बहून् शिष्यान् दृष्ट्वा यथावसरं सत्कथाप्रस्तावे सदुपदेशगर्भं सूक्तमभिनवमिव व्याकरोत् ।

तद्यथा ।

शासने सततं भूयाच्छृद्धैधन्तां सुधीप्रियाः ।
धर्म्मधाराः सदाधारा मनो वः स्पर्द्धतां सताम् ॥ ९ ॥
गाधते बाधते यश्च नाथते दधतेऽधिकम् ।
स्कुन्दते हर्षतः साधुः श्विन्दते न स धर्मतः ॥ १० ॥
वन्दते यो गुरून्नित्यं भन्दते स्वल्पलाभतः ।
मन्दते तं जनो भक्त्या स्पन्दते नो अभिग्रहात् ॥११॥
गतमिष्टं क्लिन्दते य आगतं वीक्ष्य मोदते ।
ददते व्यसने चित्तं स्वदते नो स सत्सुखम् ॥ १२ ॥
ऊर्दते कूर्दते यश्च साधुर्निःशङ्कमानसः ।
सूदते चरणं तस्य धिक्कृतो ह्लादते हहा ॥ १३ ॥
ह्लादते स्वादतेऽत्यन्तं पर्दते तुन्दमास्पृशन् ।
योगे नो यतते यस्तु जोतते न स साधुषु ॥ १४ ॥
वेथते श्रन्थते यस्तु ग्रन्थते कत्थते कुधीः ।
अतत्यत्रैव संसारे कुयोनिषु पुनः पुनः ॥ १५ ॥
परिव्रजाति भावेन गुरुचित्तं च चन्दति ।
विनयेन न कं जीवं पुन्थत्याप्तः स सेधति ॥ १६ ॥
इत्यादि भूरिशः सेधन् शिष्यान्हर्षादिकान्निजान् ।
वलशाडे खादति स्म खदति स्म च तद्दिने ॥ १७ ॥
समाप्तायां विभावर्यां व्यहरन्नवसारिकाम् ।
शिष्यान्भक्तान्पुनश्चैवमुपाक्रामच्च शासितुम् ॥ १८ ॥

भो न निन्दति यः कांश्चित्स शुन्धत्यचिरेण वै ।
न मङ्क्ति शरीरं यो न स कामेन मच्यते ॥ १९ ॥
यो लुञ्चति शिरःकेशान्नापि ग्लोचत्यथो तृणम् ।
न वाञ्छति फलं तं च संसृतिर्नहि लाजति ॥ २० ॥
कस्मैचिन्नैव चण्डन्तां न शौटन्तु कदाचन ।
चुण्डन्तूपग्रहान्भो भो सेवन्तां शासकान्सदा ॥ २१ ॥
श्वलन्तु न भवन्तो द्राक् ग्लहन्तां नैव सज्जनान् ।
धर्मद्रुमं सदोक्षन्तां चूषन्तु सत्कथामृतम् ॥ २२ ॥
रत्नाधिकान्सदार्हन्तु स्रम्भन्तां जिनशासने ।
चलन्तु नो शुभध्यानादुपसर्गशतेऽपि च ॥ २३ ॥
मनीषिभिः समेधन्ता बुन्दन्तां तत्त्वसंततिम् ।
गूहन्तु न निजं दोषं मनन्त्वागममाहतम् ॥ २४ ॥
जयन्तु तपसा कर्म नो प्रसर्पन्तु दुर्मतिम् ।
आधादिदूषितं भक्तं नादन्तु संकटेऽपि हि ॥ २५ ॥
विनये दोग्धि यो नित्यमीट्टे दीक्षाप्रदं गुरुम् ।
सोऽचिरेण कृतं कर्म दाति नास्त्यत्र संशयः ॥ २६ ॥
स्वपिति निजकृत्येषु जागर्त्यर्थान्तरे तु यः ।
इह लोके परत्रापि न चकास्ति स दुर्मतिः ॥ २७ ॥
जुहोत्याश्रमगान्भक्त्या पितॄनिव द्विजाग्र्यजः ।
शीलं जहाति नो तस्य यशो वेवेष्टि भूतलम् ॥ २८ ॥

यः कदापि प्रमादेन न दीव्यति न दूयते ।
स स्राक् प्राकृतकर्माणि छ्यति वीरवराग्रणीः ॥ २९ ॥
यः क्षमाश्रमणो घोरअपराधेऽपि मृष्यति ।
भविष्यत्कर्मजालं स न मनागपि नह्यति ॥ ३० ॥
अन्वहं युज्यते यस्तु स्वात्मलाभेन तृप्यति ।
स्वाध्याये संयसत्येष साधुरन्यस्तु वञ्चकः ॥ ३१ ॥
भावारिवर्गं सततं यः सुनोति पदे पदे ।
स संस्पृणोति स्वं चान्यमन्यस्तु तुदते वृथा ॥ ३२ ॥
महत्सूब्जति यो धन्यो ग्रामं ग्रामं च घूर्णति ।
इहामुत्र भवे प्राज्ञः स एव स्फुरति ध्रुवम् ॥ ३३ ॥
योगैः समितिगुप्त्याद्यैः प्रव्रज्यां हि रुणद्धि यः ।
विनक्ति च प्रपञ्चेभ्यो न स खिन्ते कदाचन ॥ ३४ ॥
तनोति जनतामध्ये धर्मचर्चां पुनः पुनः ।
वशेनेन्द्रियग्रामेण क्रीणीते मुक्तिमेव सः ॥ ३५ ॥
सम्भूतेऽपि गुरोर्दोषे यः स्तृणाति विरक्तधीः ।
स तेनास्तिक्यभावेन पापं मृद्नाति खण्डशः ॥ ३६ ॥
चोरयत्यङ्गजातं यो विद्वान्कूर्म इव स्वकम् ।
प्राथयत्यखिले लोके यशस्तस्य निरन्तरम् ॥ ३७ ॥
न घाटयति यः साधुरनृतं वचनं क्वचित् ।
विश्वासभाजनं लोकस्तं संमहयति स्तुतम् ॥ ३८ ॥

इत्याद्यनेकधा धर्मोपदेशं शिष्येभ्यः श्रावयन्मुनिमतल्लिका बिल्लीमोरातो नवसारीमलञ्चकार । तद्दिने तत्रत्यसंघेन बहूत्साहपुरस्सरं सामायिकोत्सवपूजावात्सल्यादि कृतम् ।

इतश्च मुनिमहाशयशुभागमनश्रवणसमुद्भूतलोकोत्तरोत्साहैः सूर्यपुरवास्तव्यैः श्रावकैः सर्वजनसंवेदनाय पुरि—

'[1]अये श्राद्धा भव्या जगति जनतानन्दजननो
महाराजः श्रीमान्मुनिजनगुणग्रामभवनम् ।
महामोहध्वंसी शशिरिव समो मोहनमुनिः
श्व आगन्तैतस्यां पुरि भुवनपुंग्रामतरणिः ॥ ३९ ॥'

इति घोषणा कारिता ।

आयातेषु च मुनिराजेषु तदानीं तत्रत्यैः कोटीश्वरैः श्रेष्ठिभिरन्तिममिदं मुनिमोहनलालानामागमनमन्तिमश्चायमस्माकमुत्साहसमय इति वर्णनान्तिमसीमागामी सामयिकोत्सवः कर्त्तव्य इति मत्वा तथा तैः प्रवेशोत्सवश्चक्रे यं कश्चिन्महाकविरेकेन महता काव्येन कदाचिद्वर्णयेत् । मया तु ग्रन्थवृद्धिभियात्यल्पधिया चायं न तथा कर्त्तुमारभ्यते ।

---

१ 'शिखरिणी' वृत्तमिदम् । लक्षणं तु निरूपितमेव प्राक् ।

अयमन्तिमः प्रवेशः सूर्यपुरे ( सुरते ) महाराजस्य त्रिषष्ट्युत्तरैकोनविंशतिशततमाब्दस्य फाल्गुनकृष्णसप्तम्यामभूत् । अथ श्रीमोहनमुनिमहोदयो नगीनदास-कस्तूरचन्द्रादेरत्याग्रहात्तत्कृतं गोपीपुरामध्यगतं नूतन-मुपाश्रयं समं शिष्यगणेनाध्यासाञ्चक्रे । स्थित्वा च तत्र कतिचिद्दिवसान् श्रीमोहनमुनिः—

गच्छदुराग्रहरहितं, सहितं सत्पक्षपातेन ।[1]
महितं जनता मनुते, तं याऽन्धा नैव रागेण ॥ ४० ॥
गच्छोऽयके मदीयो, वर्द्धयितव्यः कथञ्चिदयमेव ।
इत्याग्रहवशतो यो, भिनत्ति संघं स नो साधुः ॥ ४१ ॥
एतस्य च परिहाणे, ग्रहणे चैतस्य भाविनी पूजा ।
इति बुद्ध्या गच्छान्तर,–मङ्गीकुरुते स नो साधुः ४२॥
परकीयगच्छकुत्सा,–करणेनात्मीयगच्छपरिपुष्टिः ।
श्राद्धाश्च येऽत्र तेषां, मय्यनुरक्तिर्भवेत्सदा स्थाम्नी ॥४३॥
इत्यान्तरकौटिल्या,–दभिभूतो निरयसेवको भवति ।
पूज्योऽपि दुर्जनानां, निन्द्यः सज्ज्ञानगोष्ठीषु ॥ ४४ ॥
चेद्द्रव्यदेशकालै,–र्भावेन तथाविधेन मध्यस्थः ।[2]
गच्छान्तरमप्यङ्गी,–कुर्वन्नो लिप्यते दोषैः ॥ ४५ ॥

१ 'उपगीतिः' किलेयम् । लक्षणं तु " आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते" इति ।

२ 'पथ्या ' नामकोऽयमार्याभेदः । तल्लक्षणं यथा–"त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन" इति । इतआरभ्य "चेद्द्रव्य० " इत्यादिपद्यपञ्चकपर्यन्तमिदमेकमेव वृत्तम् ।

[1]स्वार्थकदाग्रहपञ्जर–पाती नो जैनतत्त्वानाम् ।
ज्ञाता कथमपि भवति, मोषितसम्यक्त्वरत्नत्वात् ॥४६॥
नानाविधो हि भेदो, यः सम्प्रति दृश्यते संघे ।
स हि साध्वाभासानां, स्वार्थकदाग्रहकृतो बोध्यः ॥४७॥
अ[2]द्यापि केचनाभ्यां, संघं देहमिव तीर्थकर्तॄणाम् ।
भिन्दाना अपि तृप्तिं, नाश्नुवते हा कथं जैनाः ॥४८॥
[3]श्रीवीतरागपुरुष,–प्रवर्त्तितेऽस्मिन्महासंघे ।
भेदः खरे विषाणा,–विव बोद्धव्यो विचारेण ॥ ४९ ॥
एकस्मिन्नपि जैने, मतेऽपि चेत्स्याद्विसंवादः ।
दृढमूलस्तदवश्यं, मतकल्पश्चाल्यमूलः स्यात् ॥ ५० ॥
अपरं च शोच्यमेत,–द्यच्छीर्णं राजभवनं व ।
सुन्दरमपि परभेद्यं, स्यादल्पैरेव यत्नैश्च ॥ ५१ ॥
भेदं चापरिहार्य,–मङ्गीकुर्मो वयं यदपि ।
विफलत्वमस्य वत्साः, सुशकं मन्यामहे तदपि ॥ ५२ ॥
स्याद्वादे नयवादे, मध्यममाने च जीवस्य ।
केषामपि जैनानां न विगानं दृश्यते किन्तु ॥ ५३ ॥
आचा[4]रे च कृतौ वा, भेदो यः सोऽस्ति सर्वथा तुच्छः ।
तस्मिन्कार्योपेक्षा, येन विरोधः प्रणश्येत ॥ ५४ ॥

---

१ इदमुपगीतिद्वयं प्रागुक्तलक्षणम् ।

२ इयमुक्तलक्षणा 'पथ्या'

३ 'उपगीति'–पञ्चकमिदं प्राग्गीतलक्षणमेव ।

४ 'पथ्या' किलेयम् । लक्षणं प्रागुक्तमेव ।

यद्वा करोतु तदपि, यस्मै यद्रोचते प्रेम्णा ।
न द्वेष्टु जनं भिन्नं, निजरुच्या कर्म कुर्वन्तम् ॥
गुरवोऽपि नोपरोधा,-न्निजवृत्त्या वर्तितुं शिष्या
निगदन्तु किन्तु धर्मं, शुद्धं श्रीवीतरागोक्तम् ॥
[२]एवं कृते तु वत्साः, कियता कालेन यास्यति प्र
भेदो यद्वा मैत्री, सर्वेषां सर्वगच्छेषु ॥ ५७
[३]यावन्नैवं ताव-न्मैत्री मे सर्वजीवेषु ।
इति तत्त्वस्य न लाभो, मन्तव्यो जैनजातस्य ।
[४]यथा यथा क्षुच्छयनादिके रुचि-
स्तथा तथा स्यात्स्पृहता गृहादिषु ।
यथा यथा गेहिजनैः समागम-
स्तथा तथा रागगणो विवर्धते ॥ ५९
यथा यथा क्षुच्छयनादिका जिता-
स्तथा तथा स्युर्विरताः सुखादिकाः ।
यथा यथा निस्पृहता सुखादिषु
तथा तथा रागगणो निवर्त्तते ॥ ६०
समाधिभावे विधिवन्निषेदुषां
शीतोष्णशैथिल्यकुभावनादिकाः ।

---

१ 'उपगीति'-द्वयमिदमुपगीतलक्षणम् ।
२ 'पथ्या' वृत्तमिदम् ।
३ 'उपगीतिः' खल्वियम् ।
४ 'वंशस्थ'-द्वयमिदम् ।
५ 'उपजातिः' किलेयं वंशस्थेन्द्रवंशाभ्याम् ।

विलीनतां यान्ति यथोष्णरश्मि-
सान्निध्यभाजां तिमिरप्ररोहाः ॥ ६१ ॥
[1]अत्यल्पमायुर्विभवं बलं च
विद्यां मतिं शक्तिमहर्निशं यो ।
विन्दन्सदाध्यात्मपथेऽधिरूढः
प्रच्छन्नभावेन स दुर्लभो जनः ॥ ६२ ॥
कीर्तिर्[2]मदीया भुवि संसृता भवे-
द्विदन्तु मां पण्डितमण्डलीपतिम् ।
मर्त्या महान्तोऽपि च हेतुमेतकं
धृत्वोपकुर्वन्निव नैव दुर्लभः ॥ ६३ ॥

इत्यादि बहुविधं धर्मे दृढकरं सदुपदेशं दत्त्वा सर्वानेव स शिष्यप्रशिष्यानुद्दिश्यैकं मन्त्रमिवोपदिदेश यत्स्वार्थसाधनाय धर्मव्याजो न कर्त्तव्य इति ।

अथैवमुपदेशानन्तरमुपस्थितांस्तान्सर्वानेवापृच्छत् कस्को कां कां समाचारीं सम्प्रति करोतीति ।

अथातः पन्यासश्रीयशोमुनिकमलमुनिभ्यां शिष्याभ्यां क्षेत्रोपरोधात्सम्प्रति खरतरगच्छीयां समाचारीं कुर्व इति व्याजह्रे ।

ऋद्धिमुनिप्रभृतिभिस्त्रिभिर्यशोमुनिमनुकर्तुमिच्छाम इति कथितम् ।

---

१ इयमुपजातिरिन्द्रवज्रोपेन्द्रवज्राभ्याम् ।

२ इयमुपजातिरिन्द्रवंशावंशस्थाभ्याम् ।

पन्यासश्रीहर्षमुनिकान्तिमुनिदेवमुनिभिः शिष्यैरादितोऽङ्गीकृतया तपागच्छीयसमाचार्या भवन्तमनुकुम इत्युदितम् ।

नयमुनि-कल्याणमुनि-पद्ममुनि-क्षमामुनि-शुभमुनिप्रभृतिभिर्बहुभिर्हर्षमुनिरस्माकं शरणमित्युक्तम् ।

अथ मोहनमुनयो यस्मै यद्रोचते स तथा करोत्विति सहर्षमुक्त्वा कुलशीलादिभिरयोग्यः शिष्यो न कर्त्तव्य इति पुनःपुनरुपदिष्टवन्तः । इति महानुभावानामतिदूरदर्शिनां श्रीमतां तत्रभवतां श्रीमोहनमुनीनां वचनमननेन तदानीमुपस्थितैः सर्वैरयमेव केशरमुनेः कठोर एव त्रिशङ्कूयमानत्वे हेतुरित्युन्नीतम् ।

अथान्यदा प्रवर्द्धमानरोगजाला श्रीमोहनलाला झवेरचन्द्रात्मजनगीनचन्द्रश्रेष्ठिचन्द्रस्य विनयेन जलवायुपरिवर्त्तनेन स्वास्थ्यं भविष्यतीति वदतां भक्तानां मनस्तोषाय च महेन्द्रभवनमानशासनकार्युक्तश्रेष्ठिभवनं बहिरुद्यानमधिष्ठितमलञ्चक्रे ।

कदाचित्कदाचिच्च मुनिराजो दर्शनार्थं कर्त्तारग्रामादौ यत्र यत्र समागच्छति तत्र सर्वत्रैव श्रेष्ठिभिः पूजाप्रभावनास्वामिवात्सल्यादि क्रियते स्म उच्यते स्म च मुनिराजा अद्यापि देवदर्शनादिशुभकृत्ये न प्रमाद्यन्तीति ।

अस्मिन्नेव प्रसङ्गे मुक्तिचन्द्रात्मजहीरचन्द्राग्रपत्नी जडावनाम्नी प्रबोधदानमाहात्म्यं श्रुत्वा निजभर्त्रानुमता बालिकानां संस्कृतप्राकृतादिपठनार्थं विद्यालयं स्त्रीजनयोग्यकलाशिक्षणार्थं तदालयं च पञ्चविंशतिसहस्रदानेन स्थापितवती । अन्याभिरपि श्रेष्ठिनीभिः किंचित्किंचित्तत्र दत्तम् ।

अथ श्रीयशोमुनिः प्रासेन गुरुदर्शनेनात्मानं कृतकार्यं मन्वानोऽमितप्रभावमतिपवित्रं सिद्धक्षेत्रं प्रति समं षड्भिर्मुनिभिर्गुरुमनुज्ञाप्याचलत् ।

सदा सहचारिभिः श्रीहर्षमुनिप्रभृतिभिरेकादशभिर्मुनिभिस्तु–

"देवे गुरौ च यस्यास्ति भक्तिर्बहुदिनोद्भवा ।
तस्यैवार्थाः प्रकाशन्ते नेतरस्य महात्मनः ॥ ६४ ॥
विरक्तानामयं पन्थाः शास्त्रतः परिकीर्त्तितः ।
हेयहानमुपादेयोपादानं हंसदुग्धवत् ॥ ६५ ॥
देशकालौ विचार्यार्याः कार्यं कुर्वन्ति ये जनाः ।
शीघ्रं तत्फलमृच्छन्ति लौकिकं वान्यलौकिकम् ॥ ६६ ॥
विहारादधिको लाभो गुरुपादनिषेवणे ।
सिद्धान्त इति सिद्धानां दृष्टान्तो गौतमो गणिः ॥ ६७ ॥

संसेव्य चैतानि दिनान्यथान्तिमे
काले न युक्तो गुरुपादपद्मयोः

त्यागोऽथवा तीर्णमहोदधिः कथं
निमज्जति प्राज्यपराक्रमस्तटे ॥ ६८ ॥

यद्यान्ते गुरुपादानां लाभो नो दर्शनस्य चेत्।
अजागलस्तनस्येव सेवा सर्वा निरर्थिका ॥ ६९ ॥

तीर्थैः सेव्यो भवति विहृतौ, चेद्गुरुभ्यः परः कः
सन्तो लभ्या, नहि भुवि परः श्रूयते मोहनर्षेः ।
आज्ञा रक्ष्या, गुरुजनगिरं स्तौति सानेकवारं
साधोः पन्था इति, गुरुगिरः सेवनाद्वा वरं कः॥७०॥

अथवा किं बहुना—

चिन्तारत्नं गृहे त्यक्त्वा व्रजतो विकटाटवीम्।
रत्नान्तरं समुद्दिश्य लाभो लोकेऽस्ति लाघवम्॥७१॥

इयन्तं कालमाश्रित्य गुरूनेते महामुनीन् ।
कथमन्तेऽन्यतो यान्ति निन्दिष्यन्तीति सुश्रुताः॥७२॥

इत्यादि कालोचितं परामर्शं कृत्वा तत्रैव स्थितम्। लग्नाश्च सर्वे गुरुसेवायाम्।

अत्रान्तरे सम्मेतशिखरमुद्दिश्याभितो राजभवनं परितः प्राकारभित्तिमिवातिदीर्घविस्तारसुदृढमूलात्युच्छ्रितभित्तिबन्धनार्थं झवेरचन्द्रात्मजनगीनचन्द्र-सवाइचन्द्र-लल्लुभाईतनुजछोटालालादिसंस्थापितसमष्टिः श्रीमहाराजमोहनलालमहोदयानुमत्या लक्षमितद्रविणदानप्रतिज्ञानेन निजसमानान्धनिकान्क्षेपयाति स्म । एतेषां

१ इयमुपजातिर्वंशस्थेन्द्रवंशाभ्याम् ।

यशोऽनुकुर्वन्निवाहो उपदेशः श्रीमोहनलालानामिति शब्दोऽपि दिगन्तपर्यन्तं प्रससार ।

अन्येऽपि केचन श्रावकाः शक्तिमतिक्रम्य शुभकर्मणि धनानि वितरन्ति स्म तदानीम् । यद्वा प्रचलितश्च गृहे गृहे धर्मप्रवाहः ।

अथ श्रेयस्सहजशत्रोः कलिकालस्य प्रकृतिविरुद्धमिदं शुभकर्म न तन्मित्रेभ्यो व्याधिपदवाच्यदुर्जनेभ्यो रोचते स्म । परामृष्टं चैतैर्यत्प्रत्येकशुभकर्माकारणरिपोः कलेः सर्वश्रेयोमूलश्रीमोहनमुनिसमुच्छेदेनैव यथार्थः सन्तोषो भवितेति । कर्तुं चैतज्जराजरत्पिशाचिनीप्रखरपञ्जरप्रपीडनातिशीर्णजीर्णप्रायमपि श्रीमोहनमुनिमहोदयं निर्दयं विघ्नन्ति स्म ।

महाराजोऽपि महानुभावत्वात्सर्वजनसाधारणमिदं दुःखमिति सद्भावनया सहते स्म । श्रावकास्तु धर्मरागवशीभूता बहून्भिषग्वरानानिन्युः । परन्तु न यथेष्टं फलं सम्पन्नम् । अथवा सन्निहितास्तसमयं सकलजनाकारणमित्रमपि भास्करं भगवन्तं कः क्षणमपि कथञ्चिदप्यवरोद्धुं शक्नोति । यद्वा प्रारब्धानां कर्मणां भोग एवाव्याहतमौषधमिति सार्वजनीनम् ।

अथ श्रावकमहोदयाः महाराजाः समाप्तैतद्भवभोगा

ज्ञाताः किमिति चिन्तया परमोदासीनमुखकान्तयः समभवन्। ततो लेनतो महाराजं नव्योपाश्रयमानिन्युः।

गुर्जररूढ्या त्रिषष्ट्युत्तरैकोनविंशतिशततमाब्दे चैत्रकृष्णैकादश्यां मोहमयीतो दर्शनमात्रमुद्दिश्य समायाता श्रेष्ठिशिरोमणिदेवकर्णसहधर्मिणी पुत्तली गुरुभक्तिवशंवदा सत्येकादशसहस्रमितं द्रविणं धर्मार्थं दत्तवती। उक्तवती च यदा मोहमय्यां मुनिमहोदयाभिधेयस्य चिरस्मरणार्थं यत्किञ्चित्सत्कार्यं भविष्यति तदा तत्र दशसहस्रं दास्यामि सहस्रमेकं तु सद्यएव यस्मिन्कस्मिश्चिच्छुभकर्मणि ददामि।

तदैव तिलकचन्द्रतनुजन्मनापि सहस्रमितं द्रव्यं दत्वोक्तम् यदेतद्द्रव्यजन्येनायेन प्रतिवर्षं मुनीश्वरमरणतिथौ तीर्थकृत्पूजाशृङ्गारादि कारयिष्यामीति। तदैकादश्या निजां प्रसिद्धिं त्यक्त्वापि मुनिश्रीमोहनलाला रक्षिताः।

अथायाता द्वादशी। कुबेरकल्पा नगीनदास–धर्मचन्द्रलल्लुभाईप्रभृतयः श्रावका धर्मेऽष्टौ सहस्राणि द्रव्याणि निक्षिप्य गुरोरन्तिमां दशामनुमाय श्रुत्वा चोद्विग्ना उदासीनाश्च संजाताः।

अथ परमकारुणिको मोहनमुनिमहोदय एतानेवंविधान्दृष्ट्वैवमुपदेष्टुं लग्नः।

तद्यथा–

"अहो! मयि दत्तचित्ता भवन्तः किं समीहन्ते यदयं-पर्यवसन्नलक्षणसम्पन्न इति। नाद्यैवेदं समुत्पन्नं जनिरस्यापि समं जन्मनैव। किं चाद्येदमुद्भवाति । इतः प्रागेतस्य सत्त्वेऽपि तत्तदवस्थानुभाव्यसुखप्रेप्सया न सम्पादिता प्रतिकूलानुभूतिः। अबाध्यधारया कालो गच्छतीति प्रतीयते परन्तु तत्तजनसमुपार्जिततत्तददृष्टाधीनतत्तज्ज-नवेदनीयतादृशतादृशसुखदुःखसाधनीभूतानि वस्तून्येव वस्तुगत्या तद्भावं गच्छन्ति । साधनेषु चप्रधानतमामिदं शरीरमिति नाविदितं विदुषाम् । अतः सम्भवत्येव फलवैजात्याच्छरीरस्याप्यवस्थावैजात्यमिति कोऽत्र विचारो बालो वा युवा वा वृद्धो वा समुत्पन्नो वा पर्यवसन्नो वा स्यात्। अथवा भोगिप्रकृतिप्रतिकूलप्रकृतय एव योगिनः। यच्च यौवनं विषयवञ्चितानामानन्दवनामिव तदेव तद्विद्वेषिणां योगिनां साध्यप्रतिबन्धाधायकत्वात्कालकूटकल्पमिव विभाति । अहो अमृतं योगेत्यक्षरद्वयं यत्प्रसादात्परमयोगिनोऽर्हदादयोऽमृताः संवृत्ता इति योगं वर्णयन्नेवश्रीमोहनमुनिमहाशयस्तत्क्षणमेव यथाविधि प्रत्याख्यानादिकृत्यं कृत्वा चरमसमाधावात्मानमयुनक् । बहिष्कृतश्चायमसारः संसारस्तदानीमेवतैः ।

एष च समाचारस्तदैवाखण्डब्रह्माण्डमण्डले विदितः।

यद्वाहस्करास्तसमयः कस्याविदितो भवेत् । प्रसृतश्च सीमातीतः शोकान्धकारः । अहो अद्य ध्वस्तो जैनधर्माधारस्तम्भ इति वदन्तो विदिततत्त्वा अपि शोकसागरे निमग्नाः ।

केचन तु—

हा नाथ ! हा जैनजनाग्रगण्य !
हा नम्यनम्याखिललोकमान्य ! ।
बालं पितेवातिकरालकाले
संत्यक्तवान्किं तव युक्तमेतत् ॥ ७३ ॥

केचन च—

हा पूर्णचन्द्रमुख चन्द्राकुलावतंस !
शोच्या वयं त्वयि गतेऽस्तमिदं तु शोच्यम् ।
शोच्याच्चशोच्यमिदमस्ति मुनीश्वरेश !
स्याद्वादकैरवकुलं कलयिष्यते कः ॥ ७४ ॥

केचिच्च—

जैनधर्मधुराधारो धाराधारः कुकर्मणाम् ।
गुरुर्हतो विधे ब्रूहि धरा कस्माद्वसुंधरा ॥ ७५ ॥

केचित्तु—

गुरुकल्पद्रुमोऽसेवि मया हा फलकामतः ।
तत्तु दूरे गतं ध्वस्तः सोऽस्मत्कामनया सह ॥ ७६ ॥

१ 'इन्द्रवज्रा' वृत्तम् । लक्षणं तु प्रागभिहितमेव ।
२ 'वसन्ततिलका' वृत्तम् । लक्षणं तु लिखितमेव पूर्वम् ।

तदैव दर्शनार्थमायाता अन्ये च-

दर्शनानन्दलाभाय आयाता ह्या दिशो दिशः ।
स तु दूरे गतो दुःखमवाच्यमनुभूयते ॥ ७७ ॥

परमभक्ताः परे तु-

कामं सन्तु सहस्रशो जिनजने जैनाः पदन्यासका
आचार्या गणिनो विशारदजुषः काले कराले कलौ ।
पुण्यस्यास्य गुरोर्गुरोर्गुणगणैर्वार्तैव लोकोत्तरा
ह्यासीत्सा क्व भविष्यति प्रभुरहो ह्यस्मान्कथं त्यक्तवान् ७८

इत्यादि बहुविधं विलप्यानिर्वचनीयां दशामन्वभवन् ।
अथातिखिन्नमना अपि श्रीहर्षमुनिः ।

इति मोहपरायणान्मुहुर्हतधैर्यानतिखिद्यतो भृशम् ।
श्रुतधर्मरसायनानपि धृतधैर्यो मुनिनायकोऽवदत् ७९

भवतामतिखेदकारणं विधिनानन्दविरोधिना कृतम् ।
अवलोक्यदिशोऽपिमन्महेमालिनाकास्तिकथासचेतसाम्

परमस्तिदशेदृशी शृणुसकलानामिह विश्वजन्मिनाम् ।
विदिता नहि चक्रिणांकथाप्यथवार्हत्परमेष्ठिनां किमु
तदधैर्यमिदं विमुच्यतां विफलानैव महात्मनां कृतिः ।

---

१ 'शार्दूलविक्रीडितं' वृत्तमिदम् । लक्षणं तु "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति ।

२ 'वैतालीय'-च्छन्दसायमुपदेशः । तल्लक्षणं तु " षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इति

किमु पद्मविलापनैः शतैरुदयं याति निशासु भास्करः ॥

इत्यादि बहुविधमुपदिश्य तथा तानकरोद्यथोत्तर-क्रियायामवर्त्तन्त ते श्रावका वीतशोकप्राया श्चाभवन्साधवः । अचलंश्च शवेन समं पञ्चसहस्रतोऽप्यधिका जना इति किंवदन्त्यद्यापि वर्वर्ति ।

अथ ।

[१]उपस्थित्वाद्योग्यत्वान्मोहनाध्वप्रवर्त्तिनः ।
श्रीमद्धर्षमुनीनग्रेसरीकृत्य च ते पुनः ॥ ८३ ॥

श्रीसूर्यपुरवास्तव्याः श्रावकाः सत्वशालिनः ।
कर्तुमारब्धवन्तो द्राग्वक्ष्यमाणाः शुभाः क्रियाः॥८४॥

तथाहि–भाइचन्द्रात्मजरूपचन्द्रेणोद्यापना कृता, यत्र विंशतिसहस्रमितद्रव्यव्ययोऽभूत् । मनःसुखतनुजन्मना नगीनदासेन प्रतिष्ठा कृता, यत्र चत्वारिंशत्सहस्रव्ययोऽभूत् । अमीचन्द्रस्य खुशालात्मजस्योद्यापनायां सप्तसहस्रमितद्रविणव्ययोऽभूत् । खुशालचन्द्रात्मजेन रायचन्द्रेण षष्टिसहस्रव्ययेन मन्दिरादि कृतम् । श्रीमोहनमुनीश्वरचिताभूमौ स्मरणार्थं स्तूपं लघुगृहमिव कारितं संघेन । श्रीमहाराजमरणतिथौ मासान्त

---

१ अत्राद्याक्षरवृत्तानां नामानि लक्षणानि च ग्रन्थगौरवभिया न लिखितानि । तेषामनुष्टुभि वक्त्रादिषु च यथासंभवं व्यवस्था कार्या ।

आष्टाहिकोत्सवः कृतो बहुव्ययेन नगीनदास-कल्याण-चन्द्राभ्याम् । " श्रीजैनश्वेताम्बरमोहनलालज्ञानभाण्डागार "-आदि कृतं कर्पूरचन्द्रतनयेन नगीनदासेन ।

किं बहु ब्रूमो मोहनलालमहोदयसमक्षमिव हर्षमुनिसमयेऽपि शुभकर्मारण्यभवन्भवन्ति च ।

यतः ।

महदाराधनावाप्तमहत्पदमुपाश्रिताः ।
महात्मानो भवन्त्येव स्वपूर्वेषां गुणैः समाः ॥ ८५ ॥

अथवा ।

शिष्या यदि गुरुतुल्याः स्युर्गुरवः कारणं तत्र ।
लोके कार्यगुणा अपि दृष्टाः कारणगुणैस्तुल्याः ॥८६॥

अपि च ।

सर्वोऽनुसरति सत्वो निजवंशपरम्परां नियतम् ।
जातु न सिंहीजातः शशककुलाचारमादत्ते ॥ ८७ ॥

स्वयं स्वस्य सत्तामसत्तामणुत्वं
महत्त्वं तथा व्यापकत्वं क्षणित्वम् ।
विनाशाविनाशित्वमेकत्वमाहो-
स्विदित्याद्यनेकं प्रपञ्चं प्रकल्प्य ॥ ८८ ॥

मुदा क्रीडते चेतनं सर्वसारो
महात्मायमात्मा धराधाम्नि यावत् ।

१ अत्र पद्यद्वये 'उपगीतिः' । लक्षणमस्याः प्रागभिहितमेव ।

सदा मोहनानां यशस्तावदास्तां
सुनन्दन्तु शिष्यास्तपस्तत्समा ओम्॥ ८९ ॥[1]

इति श्रीउत्तरमोहनचरिते षोडशः सर्गः ॥१६॥

इति श्रीमद्वाराणस्युपान्तबलियाप्रान्तान्तःपाति-
'मनियर' पार्श्ववर्ति 'पनिचा' ग्रामवास्तव्येन
श्रुतिस्मृतिपथपथिकेन रमापतिमिश्रेण
विरचितमुत्तरमोहनचरितं
समाप्तम् ।

शार्दूलविक्रीडितम् ।

जातो यो विमले प्रभाकरकुले ख्यातावसथ्या[illegible]
तेन श्रीरघुवंशशर्मविदुषा श्रौतं पथं [illegible]ता ।
टिप्पण्यादिपरिष्कृतिं विदधता मूले [illegible] स्थले
ग्रन्थोऽयं मतिमद्रमापातिकृतः पाठादितः शोधितः॥ १ ॥

---

## अथ ग्रन्थकाररहस्यम् ।

यथेन्द्रजाले[2] पटुतामुपेयुषो
नटस्य कार्यं वितथं विभाति नो ।
तथापि सत्यत्वपथं सुकोविदै-
र्न नीयते सार्वजनीनमेतकत् ॥ १ ॥[3]

---

१ 'भुजंगप्रयातं' वृत्तम् । लक्षणं तु 'भुजंगप्रयातं भवेद्यैश्चतुर्भिः' इति । २ 'वंशस्थं' वृत्तम् । लक्षणं तु प्रागभिहितमेव । २ 'उपजाति'रियं वंशस्थेन्द्रवंशाभ्याम् ।

[२]प्रपञ्चमेतत्सकलं तथाविधं
यच्चात्र नित्यत्वमतिः सुदुस्तरा ।
निरूपितुर्मध्यगतादलाभत-
श्चाद्यस्य चान्त्यस्य नटस्य कर्मणः ॥ २ ॥

## अष्टदलकमलबन्धः ।

मो ह ग्रा ह द्र ह द्रो व ह स्ने ह न ह ग्र ह ।
मो द ग्रा मे द्र व द्रो षे व स स्ने ह न यं ग्र स ॥ १ ॥




मोहरूपो यो ग्राहः तस्य द्रहः ह्रदः स्थानमिति यावत् ।
तेन सह द्रोहस्य वहः । तत्संबुद्धौ । स्नेहनहग्रह रागबन्धो-

च्छेदक इति यावत् । इयमपि संबुद्धिरेव । अत्र मोहनपदम-ध्याहार्यम् । अस्माकमपि स्नेहनयं रागोद्रेकं ग्रस परिहरेत्यर्थः । द्रवद्रोषे सर्वद्वन्द्वरहिते मोदग्रामे मुक्तिपुरे वस । स्वयं मोहरागरहितत्वाज्जन्मपरंपरया मुक्तिभाग्भव । अन्यानपि रागादिदोषराहित्येन तत्पदयोग्यान्कुर्विति परमार्थः ।

## मुरजबन्धः ।

मो ह ना ग वि ना र म्यं मो ह ना ख्य म ना र त म् ।
तं र ना म व ना य त्वं स्म र ना ग वि ना य क म् ॥ २ ॥



हे मोहनाग त्वं रनां निजसंचाराणामवनाय स्वसत्वसंरक्षणाय नागाना लक्षणया नागशब्दो दुर्जनसामान्यपरस्तेन स्वसजातीयदु-

र्जनाना विनायकमिव शासकम् (लक्षणा पूर्ववत्) मोहनाख्यमुनिमनारतं रम्यं विना रमणीयताशून्यं स्मरशरीरसौन्दर्येणाभिधेयतुल्यत्वेन च निजसहकारिणमिव मत्वा न तत्र तदीयेषु वा रम्यताबुद्धिं कुर्विति भावः। स्मरनागस्य मोहनस्य च सम्बोधनत्वेऽर्थान्तरमपि सम्भवतीति स्वयमनुसंधेयम्।

---

अथ संप्रति विद्यमानानां संवेगिनां श्रीमोहनलालमहाशयविनेयतद्विनेयादीनां नामानि।

पन्यास–श्रीयशोमुनिर्महाराजशिष्यः। गुणऋद्धिभक्तिसौभाग्यगजमुनयो यशोमुनिशिष्याः। गभीरमुनिः सौभाग्यमुनेः शिष्यः। नीतिमुनिर्ऋद्धिमुनेः क्षान्तिमुनिर्भक्तिमुनेः शिष्यः।

श्रीकान्तिर्मुनिमहराजाशिष्य एतस्य च नयमुनिः।

पन्यासश्रीहर्षमुनिर्महाराजविनेयः। जय, पद्म, रङ्ग, माणिक्य, चतुरमुनयो हर्षमुनिविनेयाः। पद्ममुनेः शुभमुनिर्हेतुमुनिश्च विनेयौ। प्रतापमुनिर्जयमुनेः शिष्यः

श्रीराजमुनिर्महाराजाशिष्यः। छगन, रत्न, लब्धिमुनयो राजमुनेः शिष्याः।

कालधर्मं गतस्य महाराजशिष्यस्योद्योतमुनेः शिष्यः कल्याणमुनिस्तच्छिष्यौ भक्तिमुनिर्हीरमुनिश्च। भक्तिमुनेः शिष्यो दर्शनमुनिः।

श्रीदेवमुनिर्महाराजशिष्यस्तच्छिष्याश्च लक्ष्मी, आ
कर्पूरमुनयः ।

श्रीहेममुनिर्महाराजशिष्यः । केसरमुनिस्तच्छि
बुद्धिमुनिस्तच्छिष्यश्च ।

श्रीगुमानमुनिर्महाराजशिष्यः । क्षमामुनिस्तच्छिष्य
क्षमामुनेश्च विनेयो विनयमुनिः ।

श्रीकमलमुनिर्महाराजशिष्यश्चमनमुनिस्तच्छिष्यः

---

